बध्यघातकस्वभावत्वलक्षणः न च शब्दसाम्येनानुमानमि-
त्येषा दिक् ।

अस्तु तर्हि दूषणोपक्रमेण विचार इति चेत् तमपि पश्यामः कीदृशोऽसाविति नेदं स्थूलं विरुद्धधर्म्मसंसर्गप्रसङ्गात् नास्थूलं तथा प्रतिभासप्रसङ्गात् न परानपेक्षं सद सद्दातिरेकप्रसङ्गात् नैकं तथा प्रतिभासप्रसङ्गात् । नानेकं भेदव्यवस्थितिप्रसङ्गात् न च व्यापकं निष्क्रियत्वप्रसङ्गात् नाव्यापकं अविधेयत्वप्रसङ्गादित्यादिरिति चेन्न मिथोविरोधमूलशैथिल्येष्टापादनानुकूलत्वविपर्य्ययापर्य्यवसानैस्तर्काभासत्वात् । यथा हि नायं पर्व्वतो निरग्निः निर्धूमत्वप्रसङ्गात् नाप्यग्निमान् तथोपलब्धिप्रसङ्गात् इत्यनय रेक आभासः परस्पराप्रतिक्षेपकयोरुभयोरनाभासत्वानुपपत्तेः । तथाचापि नह्य स्थूलादिनिषेधादन्यः स्थूलादिविधिः तन्निषेधाद्वान्योऽस्थूलादिविधिरिति । शिथिलमूलाश्चैते प्रतिबन्धस्यासिद्धेः सिद्धौ वा व्याप्यव्यापकतदधिकरणानां सिद्धौ विवादनिवृत्तेइष्टापादनञ्च प्रथमे अनुभूतावसिते स्थूले विरुद्धधर्म्मासंसर्गस्येष्टत्वात् तथा च वक्ष्यामः । अनुकूलश्च द्वितीयः अस्थूलताप्रतिक्षेपस्य स्थूलोपलम्भानुग्राहकत्वात् तद्रूपताव्यवहारस्य तथा प्रतिभासव्याप्तत्वाच्च एवं तृतीयोपि अनपेक्षत्वप्रतिक्षेपस्य सापेक्षत्वोपलम्भानुग्राहकत्वात् अपेक्षत्वविधेः सदातनत्व व्याप्तत्वाच्च । चतुर्थस्त्वप्रसिद्धव्यापकः सदसत्त्वस्य विरोधेनैकत्र विधिवत् निषेधस्याप्यनुपपत्तेः । पञ्चमस्तु अनुकूल

एवं अनेकत्वाभिमते वस्तुन्येकताप्रतिक्षेपस्यानेकतोपलब्धो-
पलम्भकत्वात् ताद्रूप्यव्यवहारस्य तथा प्रतिभासव्यापकत्वा-
च्चेति यष्ठस्विष्टएवासाकम्। ननु भेदः स्वरूपं वा स्यात्
इतरेतराभावो वा धर्म्मान्तरं वा। न पूर्व्वः घटोभिन्न
इति सहप्रयोगानुपपत्तेः। नापरः प्रतीतावात्माश्रयप्रस-
ङ्गात् भिन्नप्रतियोगि निरूपणाद्धि तदभावो निरूप्य स्तन्नि-
रूपणमेव च भेदनिरूपणं नोत्तरः अनवस्था प्रसङ्गात्।
तत् कथमसौ भवतु इष्यतामिति चेत् तत् किं भेद ज्ञानं-
मेव नास्ति सदपि वा नित्यं अनित्यमपि वा निर्हेतुकं सहे-
तुक मपि वा निर्व्विषयकं सविषयकमपि वा बाध्यमानविषय
कमिति तत्र प्रथमः सर्वेतो विरोधादनुत्तरः द्वितीयः सुषुप्ता-
वस्थानुरोधादुपेक्षणीयः तृतीयोपि विरोधाद्धेयः चतुर्थस्तु
भेदोल्लेखादेव त्याज्यः पञ्चमस्तु चिन्त्यते किमेतेष्वन्यतमात्मा
अस्य विषयः तदन्योवेति तत्र यद्यन्यएव किमेताभिरधिक-
रणानुपपत्तिभिस्तस्य बाध्येत एवं हि चौरापराधेन व्यक्ता-
नयं माण्डव्यनिग्रहः स्यात्। अथान्यतमात्मा तत्रापि
यदि धर्म्मान्तरमेवेति तत्वं तदानवस्थाभिया तदधिकएव
प्रवाह स्यज्यतां तस्य कुतस्त्यागः नह्यनवस्था प्रतिभासमान
मर्थं निवर्त्तयति किन्तु प्रवाहं परिहापयति गन्धे गन्धान्तर-
वत् अथेतरेतराभावमेव भेदज्ञानमवलम्बत इति तत्वं
तत्रापि ह्यात्माश्रयः तेन हि भेदज्ञानमेव न स्यात्। अस्ति
च तत् ततो हेत्वन्तरमाक्षिपेत् ननु स्वात्मनि स्वयमहेतुत्वे

स्वयमेव निवर्त्तते अविद्यावशादिति चेत् किञ्चातः नह्य विद्ये त्येवमाश्रयनिवृत्तिः तथासति घटादयोपि कुलाला-दिनिरपेक्षाः स्वयमेव भवेयुः। अथाश्रयदोषोपहततया तत्र स्वस्यैव कारणं ततो यतः कुतश्चित् तस्य जन्म तत्र दुर्निरूपमतोऽविद्ये त्युच्यतइति. विचारार्थः। नास्ति तर्हि विवादः नच तदपि दुर्निरूपं प्रतियोगिरूपत्वे नाप्रतीतावधि कारणप्रतीतिरधिकरणस्वभावत्वे नास्मृतौ प्रतियोगिस्मृति-स्वेतरेतराभावग्रहणकारणमिति निरूपणात्। अथ स्वरू-पमेव भेदप्रतिभासस्य विषय इति तत्वं तथापि सहप्रयोग एवानुपपन्न स्यन्यतां भेदेन तु किमपराद्धं सोऽपि दृश्यत इति चेत् सत्यं नैमित्तिकस्तु स्यात् न तु स्वरूपतः नहि घटमानय घटमवलोकयेत्यादौ भेदपदमपि प्रेक्षा-वानुपादत्ते व्याख्यानान्तु मूढ प्रबोधनाय घटः कुम्भ-इतिवत् सहप्रयोगेपि न दोषः तथापि कः परमार्थः यथा-यथं त्रयमपि पटस्य हि घटात्मना प्रतीतिरघटात्मना च प्रतीतिस्ततो वैधर्म्यप्रतीतिश्चे त्यनुभवसिद्धं तत्राभावस्य प्रथन मात्रं अभावान्तरधर्म्मान्तरयोरभावात् सामान्यादिषु त्रिषु स्वयं धर्म्मान्तराभावात् द्रव्यादिषु त्रिषु स्वयं त्रयस्यापि सम्भवात्। भवति पटोऽयं न घटस्तन्तुमयश्चेति गन्धोऽयं न रूपं सुरभिश्चेति गतिरियं नोत्क्षेपणं तिर्य्यक् चेति लक्षणञ्च स्वरूपभेदस्य तादूप्येणाप्रतीतौ प्रतीतिः इतरेत-राभावस्य त्वबाधितः समानाधिकरणे निषेधप्रत्ययः वैधर्म्य-

स्य तु विरोधः स चैकधर्म्मासमावेश इत्येषा दिक्। सप्तमो प्यनुकूल एव घटादौ व्यापकता प्रतिषेधस्याव्यापकतोपलम्भोपष्टम्भकत्वात् व्यापकत्वस्य निष्क्रियत्वव्याप्तत्वाच्च अष्टमस्तु क्वचिदिष्टएव यत एव हि क्वचिदविधेयोऽतएव क्वचिद्विधेयोऽव्यापक इति व्यवह्रियते। सर्वत्रेति चेन्न व्याप्त्यसिद्धेर्विरोधाच्च नहि यदव्यापकं तत् सर्वथाविधेयमिति प्रतिबन्धः क्वचिदस्तीत्यव्यापकार्थः सर्वत्र नास्तीति चाविधेयार्थस्तवाभिमत स्तदनयोर्विरोधोऽपि स्यात् यद्विधेयस्वभावं तत् कथं प्रतिषेध्यमिति चेन्न प्रतिषेध्यस्वभावता हि विधेयस्य विरुद्धा न तु प्रतिषेधप्रतियोगितापि। अथ योऽस्ति कथं तस्य प्रतिषेधोप्यस्तीति चेत् कोदोषः अनयोरविरोधप्रसङ्ग इति चेत् प्रकारभेदेन प्रसङ्गोपि न दोषमावहति तदभेदेन तु विधिनिषेधौ केन स्वीकृतौ यं प्रत्यविरोध प्रसज्येतेति। एतेन कालभेदादिनाप्यविरोधोद्रष्टव्यः। अस्तु तर्हि स्थूलघाती विरुद्धधर्म्माध्यासो ग्रहणाग्रहणादिः पञ्चविधः नासिद्धेः तथाहि यो येन यत्रैव यदैवोपलभ्यते स तेन तत्रैव तदैव नोपलभ्यतइति नानुभवः नाप्यभ्युपगमः एकावयवसहितस्योपलम्भेऽन्यावयव सहितस्यानुपलम्भइति चेत् एवं तर्ह्यवयविन्युपलभ्यमाने कश्चिदवयव उपलभ्यते कश्चिन्नेति वाक्यार्थः सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतइति न्यायात् तथाचावयवानामुपलम्भानुपलम्भा ववयविनि सञ्चार्य्य प्रसङ्गस्तदलमनेन। एतेनावृतत्वानावृतत्वं

व्याख्यातम्। अनावरणदशायां कतिपयावयवावरणेपि तथाविधस्थौल्योपलम्भः किन्न स्यादिति त्वयमिष्यते तदप्यसत् तस्य परिमाणगतसामान्यविशेषस्य ततोऽन्यस्य नियतसामग्रीवेद्यस्य तदभावे तदुपलम्भेऽप्यनुपलम्भत्वात्। एतेन कम्पाकम्पसंसर्गो निरस्तः सामग्रीभेदेनावयवनियत कम्पोत्पादे तस्यां दशायामवयविनो निश्चलत्वात्। एवं तर्हि कम्पाकम्पयोरवयवयो र्विभागात् संयोगनाशे द्रव्यनाशः स्यादिति चेत् ततः किं अपसिद्धान्त इति चेन्न एवमपि क्वचिदभ्युपगमात् सर्वत्रैवं प्रसङ्ग इति चेत् तथाप्यवयविनः किमत्याहितम्। नचैवमपि कर्मणोद्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनननियमानभ्युपगमात् कारणविशेषात् कस्यचिदेव कर्मणस्तथाभूतविशेषलब्धेः। एतेन पाणौ चलति तन्मूलभूतः परमाणुरपि चलेत् ततो अचलद्भुजपरमाणोर्विभागः ततो यो येन संयुज्यते विभज्यते वा स तत्कार्य्यद्रव्येणापीतिन्यायेन भुजपाण्योरपि विभागः ततः संयोगनाशः ततः शरीरनाशइति निरस्तम्। नहि पाणिपरमाणुक्रिया भुजपरमाणुविभागमारभते नियमेन तदनारम्भकत्वे कर्मलक्षणक्षतिरिति चेन्न आकाशादिदेशे एवमपि सर्वएवोपलभ्येत विभागिभ्यामाकाशादिदेशाभ्यां न संयुज्येतेति चेन्न अवयवसंयोगविभागाभ्यामेव तत्सिद्धेः। एतच्च सन्यगवबोधद्वारैवाधिकमनुसन्धेयं तर्हि चलदचलदवयवी लभ्येतेति चेत् नेदमनिष्टं पाणौ कम्पमाने शरीरं न कम्पत इति

प्रत्ययात्। अथवा यो यदाश्रिततयोपलभ्यते स तस्मिंश्चल-त्यचलोपि चलएव विभाव्यते, दर्पणमुखवत् जलवच्चेति द्रष्ट-व्यम्। कृतं प्रतीतिरूपकल्पनया चलत्ववयवे सर्वत्र तथैवेति न किञ्चिदनुपपन्नं न चले तु कथं तथोपलभ्यतां तथापि चलाचलाश्रयस्य चलाचलतया प्रतीतौ चलाचलजलचन्द्र-वत् द्वैतप्रत्ययोपि स्यादिति चेत् स्यादपि यद्याश्रयविच्छेदः स्यात् नह्येकस्मिन्नेव जलेऽविच्छिन्नावयवभेदेन द्विचन्द्रभ्रमो नाम किन्तु सएवैकस्थले चल उपलभ्यतेऽचले त्वचलइति वीचिषु सोऽपि सहस्रनिभ इति चेत् एवमेतत् तासां विच्छे-देनाकलनात्। अस्तु तर्हि चलाचलयोर्युत सिद्धिप्रसङ्ग-इति चेत् न स्वयं प्रतिबन्धासिद्धेः नच प्रसङ्गे व्याप्तावपि पराभ्युपगमः शरणं नचैवं पराभ्युपगमोऽपि वस्त्रादावौ दृश्यते तावदयमिति चेन्न तन्तुवस्त्रादौ विपर्य्ययस्यापि दर्श-नात् इदं मिथ्येति चेत् तत् कथं सत्यं अबाधादिति चेत् इह तर्हि बाधकान्तरं वाच्यं चलाचलत्वमेवेति चेन्न स्वतः सिद्धावपि किमिति नेदं बाधकमिति विपर्य्ययस्यापि वक्तु-मशक्यत्वादिति रक्तारक्तविरोध इति चेन्न भ्रान्तत्वात् तन्त्व-लरागिद्रव्यसंयोगासंयोगविरोधोऽस्त्विति चेन्न परमार्थवा-दिनं प्रति प्रागेव परिहृतत्वात्। इतरं प्रति का वार्त्तेति चेत् सैव तावत् तथैवाविरोधात् प्रकारभेदेनापि विरोधा-भ्युपगमे व्याप्तेरसिद्धेः संयोगतदभावयोरेवासिद्धेः सिद्धौ वा प्रकारभेदाविरुद्ध स्वाभावसादेश्यापरित्यागात् नचैवं

पदार्थान्तरवैधर्म्येण संयोगएव निराकर्त्तव्यः तद्वैधर्म्येण तेषामेव निराकरणप्रसङ्गात् । नचैवमेव न्याय्यं नियमवता हि सत्यवैधर्म्येणेतरन्निराक्रियते असत्त्ववैधर्म्येण सत्यत्वस्यैव निर्वाहात् निषेध्यप्रतीतिनान्तरीयकत्वाच्च निषेधसिद्धेः । शशविषाणादौ कल्पितेनापि निषेध्येन निषेधसिद्धिरिति चेन्न निराकृतत्वात् संयोगस्य बाधकत्वेन काल्पनिकत्वसिद्धावतिप्रसङ्गाच्च शश शृङ्गन्यायस्य च योग्यानुपलम्भाभावेनासिद्धेः इत एव बाधकात् तत्सिद्धावितरेतराश्रयत्वं शब्दप्रत्यभिज्ञानवत् संयोगप्रतीतेरन्यथोपपत्तिमात्रेण बाधकप्रवृत्तिरिति चेन्न अनुभवस्य तदनुरूपमुपाधिं मुखपिण्डमदत्त्वा भ्रान्तत्वेनान्यथोपपत्तौ तद्विपरीतानुमानप्रवृत्ते न अन्नावनुष्णत्वानुमाने प्रवृत्तिप्रसङ्गात् । नच प्रत्यभिज्ञानस्य सामान्यवत् संयोगप्रत्ययस्य तदनुरूपमुपाध्यन्तरमस्ति एवम्भूतमर्यादातिक्रमे तु त्वदभिप्रेतप्रतिबन्धप्रत्ययस्यापि भ्रान्तत्वेनान्यथासिद्धि प्रसङ्गः कथं बाध्ये च्छद्वारणे शिथिलमूलस्तर्कः कथं प्रवर्त्तेत यथालोकव्यवस्थानस्थाध्यवान्तरवत् संयोगस्यापि शब्दपाकजाद्यर्थ क्रियास्थिते स्तदध्यक्षस्यापि प्रामाण्यसिद्धे र्न भ्रान्तत्वशङ्कावकाश इति । अस्तु तर्हि तद्देशत्वातद्देशत्वरूपोविरोधः न विरोधलक्षणाभावात् नहि तद्देशसंसर्गविधो नियमेन देशान्तरसंसर्गनिषेधः । तद्देशत्वतद्देशत्वयोस्तु स्यात् तत्संसर्गस्तु केनेष्यते । अध्यक्षमेवैक संसर्गपरिच्छेदकं तदन्यावच्छेदमुखेन तदन्यवच्छेदफलमिमं विरो

ध मुद्गिरतीति चेत् स्यादप्येवं यदि नियमेनैकसंसृष्टस्यान्य-संसर्गं प्रतिक्षिपदध्यक्षमुदियात् नत्वेवदस्ति युगपदेकस्यानेकसंसर्गप्रवृत्तमध्यक्षमविशेषात् सर्वसंसर्गं वा प्रतिक्षिपेत् न वा कमपि स्वात्मानमेव वा सर्वथा न विरोधं दीपयेत् अन्ततः परमाणोरप्येकस्यानेकैः परमाणुभिः संसर्गस्वीकाराच्चेति । एतेन वृत्तिविकल्पोनिरस्तः परमाणुवृत्तावयविवृत्तेस्तुल्ययोगक्षेमत्वात् ।

अस्तु तर्हि चित्रे नीलानीलविरोधः नहि तदेकं रूपं चित्रत्वविरोधात् नानेकं एकावयवि समवायविरोधात् नचानेकं व्यापकं तथानुपलम्भविरोधात् न व्यापकं तथानुपलम्भविरोधात् । नचाव्यापकं स्वाभावविदेशजातीयत्वविरोधात् । अन्यथा विरोधाविरोधव्यवस्थाविरोधात् नचारूप एवावयवी चाक्षुषत्वविरोधादिति चेन्न चित्रत्वं हि नानात्वं वा मिथोविरुद्ध नानाजातिसमवायं वा अभिप्रेत्यैकत्वाभ्युपगमे विरोधउद्भाव्यते तदेवमेतत् नतु तथाभ्युपगमः । न खल्वेकत्वं चित्रत्वं शुक्लेष्वप्यनेकेषु चित्रप्रत्ययप्रसङ्गात् । नाप्येकस्मिन् विरुद्धानेकजातिसमवायः विरोधेनैव निराकृतत्वात् अपि तु नीलत्वादिवच्चित्रत्वमपि जातिविशेषएव स चावयववृत्तिविजातीयरूपसमाहाराभिव्यङ्ग्यत्वान्नैकरूपावयवसहितस्यावयविन उपलम्भेऽप्युपलभ्यते । अतएव चाणुके चित्रेपि चित्रप्रत्ययो न कदापि तथाप्यचित्रे पार्श्वे चित्रप्रत्ययोमाभूत् धवलप्रत्ययस्तु कुत इति चेत् अवयवरूप-

सञ्चारेणावयविनोपि तथा प्रत्ययात्। अतएव यत्रावयवरूपं न प्रत्यक्षं तत्र असरेणावेतदपि नास्ति हृश्यमेव वाह्यालोकरूपमारोप्यपिञ्जर स्वमरेणुरालोक्यते। स्यादेतत् यदि चित्रत्वं नाम जातिविशेषः कथं तर्हि विरुद्धजातीयरूप समाहारमात्रे चित्रत्वप्रत्ययइति चेत्। नवै नीलधवला रुणेषु पटेषु क्वचिदपि कार्य्ये वार्य्यश्चित्रप्रत्ययः कस्यापि वैध र्म्यानिमित्तस्तु न वार्य्यते चित्रशब्दस्याक्षादिपदवदनेकार्थत्वात्। नीलपीतादिषु मिथः संसृष्टेष्वनारब्धद्रव्येष्वपि कर्वुरप्रत्ययोभवतीति चेत् सत्यं द्रव्यान्तरोत्पादाभिमानात् स्थौल्यातिशयप्रत्ययवदुपपत्तेरिति।

अस्तु तर्हि परमाणुनिवृत्तेः सर्व्वविलोपः तथाहि बहुभिः परमाणुभिः संसृज्यमानः परमाणुः प्रत्येकं किमेकदेशेन संयुज्यत कार्त्स्न्येन वा। प्रकारान्तराभावात् न प्रथमः तस्यैकदेशाभावात् भावे वा परमाणुत्वव्याघातात्। न द्वितीयः परमाण्वन्तरेणासंसर्ग प्रसङ्गात् नह्यस्ति सम्भवः एकत्रैव परिसमाप्तवृत्तिरन्यत्रापि वर्त्तत इति न वृत्ता समानयोगक्षेमत्वात्। नह्यस्ति सम्भवोनीलएव विषय आकारे वा परिसमाप्ता पीतादिसंपृक्ता चेति न द्वितीयः तदभावात् एवमनाकारत्वमविषयत्वञ्च बुद्धेरिष्यतएवेति चेत् तत् किं यत् प्रतिभासते तदसत् आहो न प्रतिभासतएव किञ्चित्। नाद्यः असत्यपि नीलपीतादौ ज्ञानवृत्तिविकल्पस्य तदवस्थत्वात् नहि ज्ञातत्वमेव विज्ञानं नीलोऽस्ति

पीताद्यनुल्लेखित्वप्रसङ्गात् । नापि तदेकदेशः तदभावादित्युक्तत्वात् न द्वितीयः वाह्येपि वृत्तिविकल्पस्यानुपपत्तेरिति ।

स्यादेतत् निःशेषसमुदायी कृत्स्नशब्दस्यार्थः समुदाये कश्चिदेव समुदाय्येकदेशपदार्थः न च बुद्धिः समुदायस्वभावा तस्या एकरूपत्वात् तत् कुतः कृत्स्नैकदेशविकल्पोऽस्थाने कथं तर्हि तद्विषयिणी तदाकारवती वा प्रकारान्तराभावादिति यदि तदा स्वरूपेणेति ब्रूम इति चेत् स्फुरन्निरटङ्कितार्किकवेदिकाविटङ्केन केवलमस्मभ्यमभ्यसूयत दूरन्त्विति । एतेन तदतद्देशत्वं निरस्तं तथाहि बुद्धे नीलाद्याकारतां परिच्छिन्दद्ध्यक्षं तदभावव्यवच्छेदमुखेन तदविनाभूतां पीताद्याकारतामपि व्यवच्छिन्द्यात् तथाच कथमेका बुद्धि नील-पीताद्याकारा स्यादिति तुल्योऽनुयोगः भवेदेवं यदि नीलाद्याकारतायाः पीताद्याकाराभावाविनाभावः स्यात् स एव तु कुतः नीलपीताद्याकाराया बुद्धेरैकात्म्येनैव निश्चयात् प्रत्याकारनियतत्वे चित्रविप्रतिपत्तेरिति चेत् तदेतत् तुल्यं परमाण्ववयव्यादिषु । नहि तत्राप्यनेकपरमाणुसंसृष्टस्य परमाणोरनेकावयवसंसृष्टस्यावयविनोवा ऐकात्म्येनानुभूयते तथात्वे वा एकसंसर्गप्रतिपत्तिः कदाचिन्न स्यादिति तुल्यैवानुगतिः । वाचि वैचित्र्यन्तु कोपयुज्यत इति संयोगव्यवस्थापनेनैव षट्केणयुगपद्योगात् दिग्देशभेदाच्छायावृत्तिभ्यामित्यादयो निरस्ताः परमाणसिद्धासिद्धि-

भ्यामेव मूर्त्तत्वादयो निरवकाशिताः आकाश व्यतिभेदादयस्तु सम्भाविता एव सर्व्वत्र न. हेतुदशायां प्रतिज्ञापदयो र्व्याघातः कालात्ययापदेशश्च प्रसङ्गदशायामाश्रयासिद्धिर्व्याप्यासिद्धिः दृष्टान्तासिद्धिः अनवस्थालक्षणविपरीततर्कस्य तदुपष्टम्भकतया वृत्तेरनेकत्वप्रसङ्गस्य च विद्यमानत्वात्। न च प्रलयः परमाणो रसत्त्वसाधकस्य प्रमाणस्याभावात्। सावयवत्वापादकानाञ्च हेतूनामनवस्थोत्थापकत्वात तदन्य एवायं परमाणुरक्तबीजो यस्य भेदायुक्तिचामुण्डोदरमपि भत्वा निष्पततीति। नच कल्पिताश्रयाः कल्पितप्रतिबन्धाश्च प्रसङ्गा भविष्यन्तीति युक्तम् इच्छाकल्पितेन व्यवहारेण सर्व्वविधिनिषेधव्यवहारविलोपप्रसङ्गात् लोकव्यवस्थापेक्षणे तु तद्विरोधेनोत्तरस्य निषेधकस्यात्मलाभाभावादित्यसकृदावेदितत्वात् अन्यथा सर्व्वमेतद्बुद्धावपि समानं सापि हि षट्केन युगपद्योगादिभिः सावयवा प्रसज्येत। तस्यामसिद्धा इति चेन्न अनुमानसिद्धत्वात् तथाहि बुद्धिः षट्कयोगिनी मूर्त्तिमती च सत्त्वात् व्यवहर्त्तव्यत्वाद्वा आरोप्यवदिति शक्यते विपर्य्ययस्य धर्म्मि ग्राहकमानसाधितत्वादनवकाशमिदमिति चेत् एव मन्यत्रापि प्रतिसन्धेया इत्येषा दिक्।

अन्यस्तु चक्षुषो निमील्य निर्द्दयीभवितुमिच्छन्नाह अस्तु तर्हि बुद्धेरपि विलोप इति। अत्र तु किं वक्तव्यं यत्र हेत्वा दिव्यवहारो नास्ति। अस्तु परं साम्यत इति चेत् भवेदेवं

यदि संवृतिरपि परमार्थसती स्यात् अन्यथा तु न यथा वा- स्तवस्तथा साम्वृतोऽपि संवृतिरपि सतीति चेत् अस्या अप्यमत्त्वे न किञ्चिदधिकमुक्तं पर संवृतेस्तु परमाणुसत्त्व- स्वीकारे सैव बुद्धिरपरपरिच्छेद्येति । सती च बाधकवती च सम्भृतिः सतीति चेत् सत्वेव यदि सत्कथं बाधकं तथा चेत् कथं तदा नीलस्य सत्त्वमिति इष्यते तावदेवमिति चेत् सत्वैकार्थसमवायिनोबाधकत्वमेव तर्हि हेयं बाधकैकार्थ समवायिनः सत्वमेव किन्न हीयते इति चेन्न वाधकस्यापि त्यागप्रसङ्गात् । उभय मप्यत्रक्षणीयमेव तर्हि एवमेतत् मिथोविरोधस्तु हेयः नहि विरुद्धयोरेकार्थसमवायः तथा- भूतयोर्वा विरोधः शक्यउपपादयितुमृते स्वसमयात् । न च विचारावसरे स्वसमयावतार इति यथा यथा च बुद्धिनिवा- रणाय यत्न स्तथातथोज्ज्वलः प्रकाशः तन्निराकरणमपि बोद्धव्यमेवेति तदेतदायातं प्रदीपान्तरेण प्रदीपं निर्व्वाप्य तिमिरा पादनमिति । एतेन हेतुफलभावानुपपत्तेः सर्व्व विलोपइति निरस्तं तन्निराकरणप्रयासस्य साकल्यवैकल्याभ्यां तन्निराकरणानुपपत्तेः सत् कार्य्यदूषणस्येष्टत्वात् असत् कार्य्यदूषणस्य च प्रत्यक्षबाधितत्वात् तत्प्रतिपादनस्यासत- एवोत्पत्तावनैकान्तिकत्वात् सत्वे वा प्रयासवैफल्यादिति ।

स्यादेतत् माभूवन्नेतानि दूषणान्यवयविनि अनुपलम्भ- स्तु स्यात् नहि परमाणुसञ्चयादपरं किञ्चिदुपलभ्यत इति चेत् वैलक्षण्यविष्टम्भिकेयं स्थूलैकानुभवस्य सर्वजनसिद्धत्वात्

तत्प्रतिपादनस्य विकल्पमात्रं तदिति चेन्न स्पष्टप्रतिभासत्वात् औपाधिकमस्य स्पष्टत्वमिति चेत् तथाभूतानुभवमन्तरेणोपाधेरप्यभावात् अन्यथा नीलादि विकल्पानामपि तथैव स्पष्टत्वोपपत्तौ सर्व्वप्रत्यक्षोच्छेदप्रसङ्गात्। निश्चीतनिश्चितएवार्थे प्रत्यक्षस्यापि प्रामाण्यात् निश्चयोपप्लवे तस्याप्युपप्लवादिति। नच परमाणवएव स्थूलाः तत्त्वव्याघातात् नच तत्समुदायस्तस्य समुदितस्यानस्य त्वयानभ्युपगमात् अभ्युपगमे वा अवयविना किमपराद्धं नच समुदिताएव तथा प्रतिभासितुमर्हन्ति तेषां प्रत्येकमस्थूलत्वात्। नच नानादिग्देशव्यापितैव स्थौल्यं परमाणुषु प्रत्येकमसम्भवात् नच नानात्वैकार्थसमवायित्वेव मा स्थौल्यमिति साम्प्रतं स्थूलएकइति प्रत्ययनियमात् नचं भागेष्वेवारोपितेन एकत्वेनेदमुपपत्तिमत् तदसम्भवात् नहि करचरणचिवुकनासिकादि परमाणूनामैक्यं कश्चित् क्वचिदारोपयति नच तेष्वभेदनं प्रथमानेषु स्थूलप्रत्ययः नच तत्त्वे स्फुरत्येव तद्विपरीतातत्त्वसमारोपसम्भवः। अपि चैवमेकपरमाण्वात्मना परमाणुकोटिरप्यारोपिता परमाणुता मात्रतयैव परिस्फुरेत्। न स्थूलतया नच नानादिग्देशव्यापित्वरूपधर्मेणेति साम्प्रतं विरोधात् यदि हि नानादिक्काः परमाणवो देशतयावभासेरन् नैकतया देशितया चारोप्येरन् तथाच कस्य नानादिग्देशव्यापिता देशिनोऽपरिस्फूर्त्तेः। अथ तथारोप्येरन् न नानात्वेन देशत्वेनवावभासेरन् तथा च

कस्य नानादिग्देशव्यापितादेशानामपरिस्फूर्त्तेः तस्मादेकत्वारोपे परमाणुमात्रत्वावभास एव स्यादिति एवन्तर्ह्यनारब्धद्रव्यराशिषु का वार्त्तेति चेत् तावद्देशव्यापित्वमात्रेण तावत् परिमाणद्व्यवस्त्वारोपः नचेहापि तथा स्यात् अन्यथाप्यसिद्धेः नचासन्नेवैकः स्थूलः परिस्फुरति बाधकानामपास्तत्वात्। एतेन प्रतिभासधर्मोऽपि निरस्तः सोऽपि ह्यटन् बौद्धो वास्तवो वेति न त्रयीं गतिमतिवर्त्तत इति। अतीन्द्रियाश्च प्रत्येकमणवः कथं मिलिता अपि दृश्येरन्! अतीन्द्रियसमूहस्याप्यतीन्द्रियत्वात् विशिष्टोत्पादादैन्द्रियकत्वमिति चेत् किमद्यापि स्वप्ने हस्तं प्रसारयसि।

अस्त्वेवं तथापि क्षणभेदाज्जातिभेदोनिराकृतौ जातिसङ्कर प्रसङ्गात् तदभेदेपि तत्त्वादृशा न कश्चिद्विशेषः। भवतु वा जातिविशेषोऽपि तथापि स्थूलत्वमेवैन्द्रियकत्वं प्रतिप्रयोजकमस्तव्यम् अन्यथा स्थूलतामनापन्नेकोऽपि परमाणुः कदापि तयोत्पन्नः प्रत्यक्षतामियात् नियमेन तु तद्विपरीतस्य प्रत्यक्षता तथाविधस्याप्रत्यक्षतायामवविश्राम्यति अन्वयव्यतिरेकगम्यात्वाद्धेतुफलभावस्य। नच सञ्चिता अपि स्थूलतयोत्पन्ना नच बहुत्वमेव स्थौल्यं तद्विपर्य्ययस्तु सूक्ष्मता वेति तद्देशानामपि प्रत्यक्षत्वप्रसङ्गात्। नैरन्तर्य्यमपि विवक्षितमिति चेन्न तस्य प्रकृतेऽप्यसम्भवात् रूपपरमाणूनां रसादिपरमाणुभिरन्तरितत्वात् न चारोप्यते नैरन्तर्य्यं मितरेत

राश्रयप्रसङ्गात् नैरन्तर्य्यारोपे तेषां स्थूलानां ग्रहणं तद्ग्रहणे च सति नैरन्तर्य्यारोपइति। तस्मादैन्द्रियकत्वे स्थूलतायाः प्रयोजकत्वात् अप्रयोजकत्वे तत्तद्देशानामपि प्रत्यक्षत्वप्रसङ्गात्। तेषाञ्च प्रत्येकमस्थूलत्वादतीन्द्रियाएव परमाणवः तथाच सर्व्वाग्रहणमवयव्यसिद्धेरिति।

अस्तु तर्हि क्षणमात्रस्थायी स्थूलोऽर्थ इति चेन्न भागभागिनोर्युगपदुपलम्भबाधितत्वात् घटपटादिभङ्गे तन्तुकपालादीनामुत्पाद समानोपादानतया सप्रतिघत्वव्याघाताच्चेति। सोऽयमधिकरणसिद्धान्तन्यायेन स्थूलसिद्धौ क्षणभङ्गभङ्गः। एतेन यत् सत् तन्निरवयवं यथा विज्ञानं सच्च विवादास्पदीभूतोघटादिरिति निरस्तं विपर्य्यये बाधकाभावेन व्याप्त्यसिद्धेः। यत् सत्तत् सावयवं यथा घटः सच्च विज्ञानमिति चार्व्वाकपरिवर्त्तस्याप्यवकाशाच्च समोवा समाधिः। ननु निरवयवमेव विज्ञानं स्वसम्विदितरूपं घटस्य च सावयवतायामद्यापि विवादएव तत् कथं परिवर्त्तः कथं वा समः समाधिरिति चेत् शुष्कविवादस्य विज्ञानेऽपि दुर्व्वारत्वात् नहि कश्चित् कण्ठोष्ठपार्श्वजठरादिपरिच्छिन्नं पिठरमनुभवति अस्तु वा सत्त्वात् सप्रतिघत्वसिद्धिर्बुद्धावप्रतिघत्वं वा घटादाविति।

अपि च स्वतन्त्रसाधनमिदं प्रसङ्गो वा न प्रथमः घटादिशब्देन स्थूलेतराणां रूपादीनां परमाणूनां वा पक्षीकरणे सिद्धसाधनात् स्थूलमेकमभ्युपगम्य पक्षविधौ काला-

त्ययापदेशात् अनभ्युपगमे त्वाश्रयासिद्धेरिति । ननु प्रामाणिकेऽभ्युपगमे बाधः स्यात् सर्व्वथानभ्युपगमे चाश्रयासिद्धिः स्यात् । नचैवमन्त्रेति चेत् तदेवमनभःस्थल कमलपरिमलसाधनस्यापि साश्रयतामापादयदाश्रयासिद्धिदोषमोषायेत्यलमनेन । पर्व्वतादिवल्लोकप्रतीतिसिद्धान् घटादीनुपादाय निरवयवत्वानुमानं स्यात् अन्यथा ब्रह्मविवर्त्तादिविप्रतिपत्तिहततया दहनानुमानमपि पर्व्वतादौ न स्यादिति चेन्नैवमविरोधात् । नहि ब्रह्मविर्त्तादिसिद्धावप्याश्रयादयोऽन्यप्रकाराः सम्भवन्ति तथाहि सर्व्वत्र स्वप्नपर्वते स्वप्नधूमेन स्वप्नवह्निरेव साध्यते केवलं सांवृतेपि व्यवहारे सत्यानृतव्यवस्थास्तीति तस्यां निर्भरः कर्त्तव्यः । इह तु घटादिव्यपदेशेन स्थूलएव यदि पक्षीकृतः कथं निरवयवत्वेन साध्येन न विरोधः अथ परमाणुरेव कथं न सिद्धसाधनं विप्रतिपन्नं प्रति न तथेति चेत् नवै कश्चित् परमाणूनां निरवयवत्वं विप्रतिपद्यते लोकव्यामोहनिवर्हणाय साधनमिति चेत् तथापि यं लोकः स्थूलमेकमुपलब्धवान् तस्य पक्षत्वे विरोधएव ततोऽन्यस्य पक्षत्वे सिद्धसाधनमेव एकः स्थूलोऽयमिति मिथ्येति चेत् एतदेव तर्हि साध्यतां किमनेनाजागलस्तनकेशकल्पेन सत्त्वेन । नच तत्रैवेदं शक्यमुपसंहर्त्तुं व्यधिकरणत्वात् तस्माद्येन रूपेण यस्य पक्षत्वं विवक्षितं तेन सिषाधयिषितधर्म्माविरोधसिवादाभ्यां तत्रानुमानप्रवृत्ति र्नातोऽन्यथेति । नापि द्वितीयः विपर्य्यया-

पर्य्यवसानात् नच विवाद विषयोनिरवयवः तस्मान्न सन्निति विपर्य्ययः। नचैवं सावयवत्वं पक्षस्यानिच्छता प्रवर्त्तयितुं शक्यते नच तत् त्वयेष्यते नच तस्येष्टौ तेनासत्वं शक्य-साधनम् आश्रयासिद्धेर्विरोधादसाधारण्याद्वा नच विपर्य्ययोऽपि परेष्या प्रवर्त्तत इति।

कः पुनरवयविनि न्यायः तत् किं प्रत्यक्षान्न्यायो गरीयान् यद्येवं बुद्धावेव कोऽसौ तस्मादसारमेतत् तथापि यन्नि-रस्तसमस्तविरुद्धधर्म्माध्यासं तदेकमेव व्यवहर्त्तव्यं यथा विज्ञानं तथाच विवादाध्यासितएकस्थूलानुभवगोचर इति स्वभावहेतुः तावन्मात्रानुबन्धित्वादेकताव्यवहारस्य नह्ययमेकव्यवहारोनिर्निमित्तो ऽनियमप्रसङ्गात् नाप्यनि-मित्तः द्रवकठिनोष्णशीतादावपि तथाव्यवहारप्रसङ्गात्। अस्तु तर्हि बाह्येषु सर्व्वेष्वनित्यसन्देहः तथ्यातथ्य-विभागस्याशक्यत्वादिति चेन्न तावत् सर्व्वस्य यथार्थत्वादेव विभागोऽनुपपन्नः उत्तरविरोधात् तथाहि विपरीतमवगतं मयेति लौकिको प्रतिपत्तिः अन्यथाख्यातिरिति च वैनयिको यथार्थो न वा उभयथाप्युत्तरेण न सिद्धिः। शब्दसंला-पमर्थयाथार्थमात्रमेतन्न प्रतीतिरिति चेन्न विवादानुपपत्तेः नहि व्यवहारमात्रे परीक्षकाणां विवादः नच नायमस्तीति शब्दार्थे विवादइति चेत् एवं सत्यप्रतीतस्य निषेद्धुमशक्य-त्वात् पराभिप्रायनिषेधार्थत्वाच्च विवादस्य अभ्युपगन्तृप्रति-षेद्धोः प्रतिषेध्यप्रतीतिः कथन्नास्तीति नचान्यथानादन्यत्र

प्रवृत्तिसम्भवः अतिप्रसङ्गात्। नच ज्ञानसान्निध्यं नियामक मतिप्रसङ्गात् नच तत् सहितोभेदाग्रहः। अग्रहप्राधान्ये भेदाविवचायां निवृत्तेरपि प्रसङ्गात् तद्धेतोरभेदाग्रहस्यापि विद्यमानत्वात् नासौ निवर्त्तकः अपि तु भेदग्रहइति चेन्न रजतएव नेदं रजतमिति ज्ञात्वा न निवर्त्तेत भेदग्रहस्य तत्कारणस्याभावात् भावे वा विपरीतख्यातिरभिन्ने भेद-प्रत्ययात् तस्मात् प्रवर्त्तकवन्निवर्त्तकोऽप्यग्रहएव तेषां स्वी-कर्त्तुमुचितः तथा च स दोषस्तदवस्थएव। अथ भेदः प्रधा-नम् अङ्गमग्रहः तदा सत्येव रजतज्ञानाद्रजते न प्रवर्त्तेत इदमंशरजतांशयोर्भेदाभावादित्यादि स्वयमूहनीयम्। प्रवृ-त्तिवत् प्रतिपत्तावप्युभयाग्रहस्तुल्यइति चेन्न अग्रहस्याविव-क्षितत्वात् सामग्रीविशेषादेव तत्सिद्धेः तत्वेऽपरिस्फुरतीति तु नियमः नच क्वचिदपि भेदावभावपि तत्त्वं यतस्तथा स्या-दित्येषा दिक्। नापि सर्वस्यायथार्थत्वात् तद्ग्राहकस्य यथार्थत्वाभ्यामुत्तरविरोधात् तत् किञ्चित् प्रमाणं किञ्चिद-प्रमाणमिति द्विभागएव वस्तुगतिः। नचासौ प्रतीति गति-मवधूय व्यवहारगोचरः कथन्तातु निरूप्यते स्वतः परतोवे-ति आद्ये स्वयं ग्राहकेणेति वा। तत्र न प्रथमः स्वसम्वेद-नस्यासिद्धः प्रकाशत्वस्यासाधारणत्वात् शब्दसाम्ये नानुमा-नप्रवृत्तेः। नचाध्यक्षमेव प्रमाणं सन्दिग्धभेदत्वात् स्वप्रत्य-क्षस्योपलम्भस्य चार्थदृष्टिः प्रसिद्धइति परेण परवेदनेऽनव-स्था स्यात्। नच क्रिया सजातीय क्रियाकर्म्मतामश्नुते छि-

दावदिति। तर्कपुरस्कारान्नैषदोष इति चेन्न उपलम्भाप-
रपर्य्यायादृष्टेः सिद्धिर्निष्पत्तिर्वा स्यात् प्रतीतिर्वा आद्ये अ-
नागतोपलम्भवेदनप्रसङ्गः अनुपलब्धस्यानिष्पत्तेः नचावि-
द्यमानेनाविद्यमानस्योपलम्भइति स्वसम्वित्तावसम्वित्तिरेव।
द्वितीये तु सिद्धसाधनं नह्यनुपलब्धोपलब्ध उपलब्धोभवति
नचैवं सत्यर्थोऽपि नोपलभ्येत नह्युपलम्भप्रतीतिरर्थवेदनम्
अपितूपलम्भनिष्पत्तिः। उपलम्भादृष्टौ उपलम्भनिष्पत्तिरेव
व्यवहारः कुतइति चेत् माभूत् नह्यव्यवहारादेव निष्पन्नस्य
वस्तुनोनिवृत्तिःतथाच तन्निबन्धनोऽर्थव्यवहारोदुर्व्वारइति।
नचानवस्था अवश्यवेद्यत्वानभ्युपगमात् निश्चयवत् अन्यथात्व-
निश्चितनिश्चयस्य नाद्यनिश्चयोऽपि सिद्ध्येत नचासावात्मन्यनि-
श्चयइति तदिदं वधूमाषमापनष्टत्तान्तमनुहरति। छिदा-
दिवदिति दृष्टान्तमात्रेण नास्मदवधानं ज्ञानं न ज्ञानान्तर
कर्म्मतज्जातीयक्रियात्वात् या यज्जातीया क्रिया नासौ त-
त्क्रियाकर्म्म यथा छिदा छिदान्तरस्येति तु न्यायविप्लवः छि-
दावत् सर्व्वथा सजातीय कर्म्मत्वे साध्ये बाधितविषयत्वात्
पुरुषान्तरज्ञानस्य च ज्ञानान्तरवेद्यत्वात् स्वयमपि स्मृत्या-
दिगोचरत्वाच्च। स्वकर्म्मत्वे साध्ये दृष्टान्तस्य साध्यविकलतया
हेतोर्विरुद्धत्वादिति। नापि स्वग्राहकेण विवेचनानुपपत्तेः
नहि प्रमाणग्रहणं यथार्थत्वैकनियतमप्रमाणेऽपि प्रमाणाभि-
मानात। अन्यथा विपर्य्ययज्ञानादप्रवृत्तिप्रसङ्गाच्च ततो यदि
प्रामाण्यमापाततः स्फुरेदपि तथापि नियमहेतोरभावात्

प्रमाण मेवेदमिति निश्चयः कुतः सच मृग्यते पारलौकिकव्यवहाराङ्गत्वाच्च शङ्कानिवर्त्तनेन तदप्रत्यूहं निश्चितमेवेति चेत् तन्निवृत्तिरेव कुतः प्रमाणान्तरादिति चेत् तदपि निश्चयफलमन्यथा वेति अन्यथात्वेन शङ्कोच्छेदो निश्चयसाध्यत्वात्तस्य निश्चयफलत्वे तु योमृग्यते न चासौ स्वतइति स्मरणमात्रं तावदस्तु स्वतइति चेत् किन्तेन नेतदप्यननुसंहितोपाधेरुपहितप्रत्ययायोगात्। नच विषयोपधानमात्रं प्रामाण्यं तदाभाससाधारण्यात् अपि त्वनुभवस्य सतोभूतार्थानुसन्धानम्। नचार्थानुसन्धानेऽपि तस्य भूतत्वमनुसन्धीयत आरोपितत्वव्यावर्त्तकविशेषाननुसन्धानात्। अननुसंहितस्य चारोपसाधारण्यात क्वचिद्विशेषोऽप्यनुसन्धीयतइति चेन्न क्वापि प्राथमिकेन अन्यथानभ्यासदशायान्तत्रापि संशयोन स्यादभ्यासदशोत्पन्ने तु अनुसन्धानं व्याप्तिग्रहजनित संस्कारसमुद्भवस्मरणबलेन भवत् प्रमाणान्तरशरीरएव प्रविशतीति परतएवावशिष्यते। तत्राप्यनवस्थेति चेन्नतावदसौ दृष्टान्तद्वारिका प्रागेव तन्निश्चयात् फलद्वारिका तु स्यादपि यदि प्रामाण्यमवश्य निश्चेयमभ्युपेयते। अज्ञातप्रामाण्येन कथं परप्रामाण्यवेदनमिति चेत् यथा विषयवेदनम्। अस्तु तर्हि धर्म्मिलिङ्गद्वारिका ताभ्यामननुमानात्। तन्निश्चयस्य च प्रामाण्यनिश्चयमन्तरेणानुपपत्तेः न हेताभावात् यत्र लिङ्गज्ञाने धर्म्मिज्ञाने वा तथ्यातथ्यभावेन द्वैत मुपलभ्यते तत्र तथ्यत्वानिश्चये लिङ्गाभासशङ्कासंक्रा-

न्ततया न निश्चीयते यत्र तु तज्ज्ञानं तदेकनियतं तत्र तावतैव लिङ्गनिश्चयस्तदाभासशङ्कानुत्थानात्। एककोटिनियतोह्यनुभवानिश्चयः ज्ञानं तद्धर्म्मग्राहिणि च ज्ञाने न द्वैतमिति व्यवस्थितिरेव तस्यापि प्रामाण्यनिश्चयः परतएवेति न्यायसम्प्रदायः।

अतएवेति विशेषान्तादृशस्य स्वतएवेति तात्पर्य्याचार्य्याः। स्यान्मतम् एतदेव तु कथं निश्चेयं यदेवम्भूतमेककोटिनियतमेव यावता तत्राप्यनवस्थितिरिति चेन्न व्याप्तिज्ञानस्य साक्षादात्मन्यप्रवृत्तावपि सर्वोपसंहारेण यदुपाधिमुपादाय प्रवृत्तिः तद्धर्म्मवत्वात् तज्जातीयन्तत्रोपाधिः तच्च तत्प्राप्यविशिष्टमनुव्यवसायत्वात्। नच सामान्येन नियमनिश्चये तदालिङ्गिते विशेषे द्वैतशङ्कावकाशः। यथा वाचकः शब्दइति स्वात्मनोवाचकत्वं न साक्षाद्विधत्ते प्रवृत्तिविरोधात्। तथापि सामान्येन यदुपाधिमधिकृत्य प्रवृत्तः शब्द स्तद्वत्त्वात् शब्दशब्दोवाचको न वेति शङ्कया न परिभूयते नाप्यनवस्थेत्येवमिहापीति तर्काश्चात्र भवन्ति धर्म्मिज्ञानं व्यभिचरेत्। निरालम्बनमसदालम्बनं वा भवेत् निषिद्धञ्च तत् यद्यनुव्यवसायो व्यभिचरेत् तदार्थकर्म्मकोऽपि न स्यात् ज्ञानेतरस्यार्थप्राकट्याभावात् यदि तज्जातीयं व्यभिचरेत् व्यभिचारोऽपि क्वचिदपि न व्यवतिष्ठेत तदव्यवस्थितौ व्यभिचारोऽपि न स्यात् अन्यथाख्यातिरुत्पत्त्या तस्य तत्वस्थितौ चान्यथात्वं स्यात् तदवधिकत्वात्।

एतेन स्वप्नजागरावस्थयोरविशेष इति निरस्तम् असत्ख्यातेरात्मख्यातेश्च निराकृतत्वात् अन्यथाख्यातेस्तत्त्वख्यातित्वव्यवस्थामन्तरेणानुपपत्तेरिति । सा च जागरेऽपि यदि न स्यात् तदा न भवेदेव तथापि कथमनयोरवस्थयोर्विभागः कर्त्तव्य इति चेन्न लोकसिद्धत्वात् । किमनयोर्लक्षणमिति चेत् कर्तृकर्म्मकरणदेशकालप्रबन्धबाधः काकतालीयसम्बादवान् स्वप्नस्य प्रबन्धे काकतालीयः कस्यचिदेव विषयस्य बाधो जागरस्येति । एतेन बाध्यप्रबन्धोऽवस्थाविशेषः स्वप्नः प्रबन्धबाधकादिबाध्यप्रबन्धान्तो जागरितमित्यपि द्रष्टव्यमित्येकांशे प्रमाणमात्रविप्लवो भवेत् । तथा च न्यायकृदिः प्रेचावान्न तत्त्वमधिगच्छेदिति भियेति ।

---

अस्तु तर्हि गुणगुणिनोरभेदान्नैरात्म्यं क्षणिकज्ञानमात्रापरिशेषादिति चेत् उच्यते । अस्ति तावदिह दर्शनस्पर्शनाभ्यामेकार्थ प्रतिसन्धानं तदिदमेकैकविषयं वा स्यात् समुदायविषयं वा तदतिरिक्त वस्तु विषयं वा वस्त्वननुरोध्याकारविषयं वा अलीकविषयं वा नाद्यः । नहि यदेव रूपं सएव स्पर्श इति । नच रूपं त्वगिन्द्रियग्राह्यम् अन्धस्यापि नीलादिप्रत्ययप्रसङ्गात् । नचैकमेव वस्तु करणभेदेनान्यथा प्रथत इति युक्तम् अनात्मकत्वप्रसङ्गात् भेदाभेदव्यवस्थानुपपत्तेश्च । नापि द्वितीयः सहि एकदेशतया वा एककालतया वा एककार्य्यतया वा एककारणतया वेति ।

न तावदुपादानरूपैकदेशसम्भवः तयोः प्रति नियतोपादान-
त्वात् सम्भवे वा तदेव द्रव्यमिति पर्यवसितं विवादेन । ना-
प्यधिकरणीभूतभूतलाद्याधारतया तत्सम्भवः चक्षुषा ह्युपल-
भ्यमाने भूतले रूपविशेषे घटोऽपि चक्षुषैवोपलभ्यमानो रूप-
विशेषस्तदाधार इति शक्यते निश्चेतुं तयोरधरोत्तरभावे-
नैकज्ञानसंसर्गित्वात् तदधिकरणाः स्पर्शादयोऽपीति तु
कस्य प्रमाणस्य विषयः नहि स्पर्शादय चाक्षुषे चेतसि
चकासति । त्वचोऽयं व्यापारइत्यपि नास्ति तयापि भूत-
लघटस्पर्शयोराधाराधेयभावप्रतीतेः । नच समुदाययोस्तत्
सम्भवः परस्पराश्रयत्वप्रसङ्गात् एकाधारतायां हि समुदा-
यानुसन्धानं समुदायानुसन्धाने चैकाधारतानुसन्धानसम्भव
इति अनवस्था प्रसङ्गाच्च भूतलस्यापि समुदायत्वं किंकृत-
मित्यनुयोगानिवृत्तेः । अतएव नैककालतया प्रमाणा-
भावात् भावे वा रासभकरभयोरप्येक कालतया समु-
दायत्वप्रसङ्गः भेदाग्रहस्य प्रवृत्तेऽप्यसम्भवात् । अतएव
नैककार्य्यतयापि उपादेयरूपस्यैककार्य्यस्याभावात् एकोद-
काहरणलक्षणा अर्थक्रिया इत्यपि न युक्तं रूपाद्यतिरिक्तस्य
उदकस्यानभ्युपगमात् एकैकस्यानेकाहार्य्यत्वे प्रमाणा-
भावात् समुदायस्य चासिद्धेः । अतएव नैककारणतया-
पीति निमित्तमन्तरेण तु समुदायव्यवहारेऽति प्रसङ्गः ।
तृतीये न विवादः । नापि चतुर्थः सहि विज्ञाननय
माश्रित्य वा स्यात् द्विचन्द्रादिवद्विसम्वादाद्वा । आद्ये तु

रूपादिषु कः पक्षपातः प्राप्तिरर्थक्रियास्थितेश्च न द्वितीयोऽपि। ते हि रूपादीनामिति चेन्न तेषां किन्तु तस्यैवेति किन्न स्यात् बाधकादिति चेन्न तावत् क्रमयौगपद्यविरोधो रकारकविरोधो वा बाधकं निषिद्धत्वात् क्षणिकपरमाणुरूपद्रव्येणाक्रान्तेश्च। सम्बन्धाभावइति चेत् असम्बन्धस्तावदस्तु कथं तद्वत् प्रतीयतइति चेत् तेषान्तथोत्पादादिति परिहारोऽस्तु तवैव यथा शरीरचेतनावदिति। रूपादिभिरेव समस्तार्थक्रियासिद्धेः किन्तदिति रिक्तद्रव्यकल्पनयेति चेन्न तावन्मात्रेणैव समस्तार्थक्रियासिद्धेः किं रूपादिकल्पनयेत्यस्यापि वाचाटवचसोऽवकाशप्रसङ्गात् प्रतीयमानत्वादिति चेत् तुल्यम् एतेनालीक विषयतापि निरस्ता। अभेदसाधनं बाधकमिति चेत् किन्तत् सहोपलम्भनियमइति चेन्न समसहोपलम्भनियमस्यासिद्धेः पीतशङ्खोपलम्भादौ श्वेत्यानुपलम्भेऽपि शङ्खोपलम्भात्। नासौ शङ्खः किन्तु शङ्ख इव तैमिरिककेशवदिति चेत् अतोगुणवद्विशेषः यत्तैमिरिककेशाः करतलपरामर्शप्रतिनियतार्थ क्रियशोरपायान्नसम्भवन्तीति व्यवस्थापयति इह तु तत्सम्भवेऽपिशुभ्रतामात्रानुपलम्भादिति। व्यापकत्वादिति चेत् वस्तुनःव्याप्तिरुपलम्भयोर्वा आद्ये न विप्रतिपत्तिः नच व्यापकानुपलब्धिमात्रेण व्याप्यतदुपलब्धी निवर्त्तेते दहनानुपलब्धा धूमतदुपलब्ध्योरपि निवृत्तिप्रसङ्गात्। तत्रापि वा किन्न परिकल्पयसि धूम इवासौ न धूम इति पावकवत्तानुपलब्धेरिति। तस्मान्न

व्यापकानुपलब्धेर्व्याप्यनिवृत्तिः किन्तु व्यापकनिवृत्तेः सा चात्रासिद्धेति वाच्यं तदेतत् तुल्यं प्रकृतेऽपि उपलब्धेस्तु व्याप्तिरिहैव भग्ना स्वेत्यानुपलम्भेऽपि शङ्खोपलम्भादित्युक्तम् । स्यादेतत् पीतएवशङ्खः उत्पन्नइति चेन्न पुरुषान्तरेण श्वेतस्यैवोपलब्धेः । नाप्यसमएव सहोपलम्भनियमो हेतुरनैकान्तात् । अभास्वरं रूपं भास्वरेण सह नियमेनोपलभ्यते ततोभिन्नञ्चेति देशाविच्छेदइति चेन्न असिद्धेः देहदेहिभ्यामनैकान्ताच्च न तयोरविच्छेदानुपलम्भेऽप्युपलम्भादिति चेत्तुल्यं रूपाद्यनुपलम्भेऽपि तद्वतामुपलब्धेः । तथापि न विपर्य्ययः कदापीति चेत्तुल्यं नहि देहानुपलम्भे देह्युपलम्भवद्देह्यनुपलम्भेऽपि देहस्योपलम्भसम्भवः । तव दर्शने प्रतिपत्तिनिष्पत्तिसामग्रीसाहित्यनियमेन सहोपलम्भोना देशाविच्छेदो वा स्यात् नियमेन विरुद्धधर्म्माध्यासाद्भेदश्चेति कोविरोधः । धर्म्मविरोधएव कोऽत्रेति चेत् तदुपलम्भेऽप्यनुपलम्भः तदभिधानेऽप्यनभिधानं तन्निषेधेऽप्यनिषेधइत्यादि ।

नीलमुत्पलञ्चलतीत्यादौ च व्यावृत्तिभेदनिराकरणपूर्व्वकएव न्यायोऽनुसन्धेयः अन्यथोपाधिभेदात् । अभेदे च धर्म्मधर्म्मिणोर्दूराद्दूरतया ग्रहणे पटुपटुनो कुतः । नच पुरुषभेदेन तथैवान्यस्योत्पादः एकस्य द्वैरूप्याभावात् नचान्यान्यएवासौ एकदेशतया तत्त्वेन प्रतिसन्धानात् । नच सा भ्रान्ता भिन्नदेशस्य तथाभूतस्य प्रत्यासीदता-

प्यनुपलम्भात् । नच निरालम्बएव तदुपलम्भोहस्तादि देशप्रतिनियमानुपपत्तेः । न चाधिपतिप्रत्ययत्वात्तस्येति युक्तम् अनुभवानां तद्देशोल्लेखाननुरोधात् उल्लेखे वा सएवालम्बनप्रत्ययः तावन्मात्रानुबन्धित्वादवलम्बनव्यवहारस्य । नच देशोऽस्यालम्बनं नतु हस्तादिरिति साम्प्रतम् अनुपलब्धविशेषतया देशदेशिनोरविशेषात् । नचदवीयांसोऽपि विशेषाः स्फुरन्त्येव नतु निश्चीयन्तइति युक्तम् । नहि योगविमलाञ्जनधौतदृष्टेरन्यस्य ताराव्यूहगतयः प्रतिभान्तीति शक्यं प्रतिपादयितुम् । अनिश्चयानुपपत्तेश्च अनुभूतोह्यात्मा न निश्चीयतइति हेतुर्वाच्यः । वासनानुद्भवइति चेन्न निःशेषविशेषवन्तं धर्म्मिणमुपलभ्य विदूरवर्त्तिनस्तदखिलस्मरणेऽपि अनुभवव्यापारानुसारिनिश्चयानुदयात् । तथापि चानुभवकल्पनायां सर्व्वः सर्व्वदा सर्व्वं जानाति नतु निश्चिनोतीति किन्न स्यात् । भ्रान्तिवशात्तद्विपरीतविशेषनिश्चयेऽनुभूतविशेषानिश्चय इति चेन्न अनुभववैफल्यनिश्चयस्य सर्व्वत्रानाश्वासप्रसङ्गात् । यत्र च विपरीतस्याप्यनिश्चयस्तत्र का वार्त्ता यथा पराचीनैर्भागैरर्वाचीनानां संयोगविभागयोरिति ।

अस्तु तर्हि नैरात्म्यम् अनुपलब्धेरिति चेन्न "सर्वादृष्टेश्च सन्देहात् स्वादृष्टेर्व्यभिचारतः" दृश्यत्वविशेषणान्नैवमिति चेन्न तदसिद्धेः । परोपगमसिद्धेरदोषइति चेन्न स्वतन्त्रसाधनत्वात् । यदि परः सह सैव नैवमभ्युपगच्छेत्

नमं साधनमिदं मूर्च्छेत् यदि च पराहष्टिमवधूय दृश्यन्त-मभ्युपगच्छेत् एवमपि सम्भवेत् नचैवं शक्यं तस्य तदुपहितरूपत्वादिति संक्षेपः। विस्तरस्त्वसल्लोचणिका इति वर्द्धनीयः।

अथात्मसद्भावे किम्प्रमाणं प्रत्यक्षमेव तावत् अहमिति विकल्पस्य प्रामाण्यस्यात्मसिद्धत्वात्॥ नचायमवस्तुकः सम्दिग्धवस्तुकोवा अशाब्दत्वादप्रतिक्षेपाच्च नच लैङ्गिकः अननुसंहितलिङ्गस्यापि स्वप्रत्ययात्। नचस्मृतिरिय मननुभूते तदनुपपत्तेः। अनादिवासना वशादनादिरयमवस्तु कोविकल्पइत्यपि न युक्तं नीलादिविकल्पसाधारण्यात्। इह वासनामुपादायानाश्वासे प्रमाणान्तरेऽपि कः समाश्वासो यतो नीलादिविकल्पेषु समाश्वासः स्यात्। तस्माद्वासनामात्रवादं विहायागन्तुकमपि किञ्चित् कारणं वाच्यं तच्चाप्तानाप्तशब्दौ वा लिङ्गतदाभासौ वा प्रत्यक्षतदाभासौ वेति। तत्र यथा प्रथममध्यम प्रकाराभावान्नीलविकल्प स्वरसं कल्पमालम्बते तथाहमिति विकल्पोऽपि तत्रायं प्रत्यक्षपृष्ठभावित्वे साक्षादेव सवस्तुकः तदाभासे तु मूलेऽस्य पारम्पर्य्यात् सवस्तुतेति। नच बाह्यप्रत्यक्षनिवृत्तावेव निर्मूलत्वं वह्विविकल्पस्यापि तथात्वप्रसङ्गात् तत्र स्वसम्वेदनं मूलमिहापि मानसप्रत्यक्षमिति न कश्चिद्विशेषः। शरीरादिवस्तुको भविष्यतीति चेन्न निरुपाधिशरीरेन्द्रियबुद्धितत्समुदायालम्बनत्वेऽति प्रसङ्गात्। स्वस-

त्वभिमशरीरादावयं स्यादिति वाच्यं तत्र कः स्तीयइति वचनीयम् । अनन्यत्वं खल्वं सर्वभावानां तथा च यदा तेनैव तदनुभूयते तदा प्रत्येतुः प्रत्येतव्यादव्यतिरेकादहमिति स्यात् । अतएव घटादयोन कदाचिदनन्यानुभविततका इति न कदाप्यहमास्मदर्मिति चेत् एवन्तर्हि लब्धतेऽप्यहं प्रत्ययः शरीरादावारोपरूपएव ततः प्रत्येतु रन्यत्वात् बुद्धौ मुख्यएवेति चेन्न तस्याः क्रियात्वेनानुभूयमानाया भिन्नस्य कर्त्तुरहं छिनद्मीतिवदहं जानामीत्यनुभवात् नीलादिप्रत्येतव्याकारवत् प्रतिपत्त्राकारोऽपि । प्रतिपत्तेरेवायमात्मा तथा भासत इति चेत् तर्हि प्रत्येत-व्यप्रतिपत्त्राकारयोस्तुल्ययोगक्षेमत्वात् सिद्धं नः समीहितम् । अस्तु स्वोपादानमात्रमिति चेन्न तत्प्रतिभासने तदाकारस्यापि प्रतिभासप्रसङ्गात् आकारमन्तरेणाकारिणोऽनवभासात् प्रवृत्तिसन्तानान्योबुद्धिसन्तानः प्रतिपत्ता वयं तमालयविज्ञानमाचक्ष्महइति चेत् । अस्तु तर्हि प्रवृत्तिविज्ञानोपादानमनादि निधनः प्रतिपत्ता स किं सन्तन्यमानज्ञानरूपः तद्विपरीतोवा इति चिन्तावशिष्यते निःशेषिता चासौ प्रागिति ।

---

कः पुनरत्र न्यायः प्रतिसन्धानं तथ्यमिदमित्यसिद्धमतथ्यञ्च विरुद्धम् अवशिष्टमनैकान्तिकमिति चेन्न हेत्वर्थानवबोधात् नहि प्रत्यभिज्ञानमात्रमत्र विवक्षितं तत् किं कार्य्य-

कारणयोरेकसन्तान प्रतिनियमः। सोऽपि विवक्षइति चेत् एषोऽपि न विवक्षितो नः। कस्तर्हि पूर्वापरधियामेक कर्तृकतया विनिश्चयः। एषोऽपि तासामुपादानोपादेयभावेनाप्युपपद्यतइति चेन्न स्थैर्य्यस्थितौ तदभावात् क्षणिकत्वेऽपि नैकजातीयत्वे सति तदुत्पत्तिरेवोपादानोपादेयभावः शिष्याचार्य्यधियामपि तथाभावप्रसङ्गात्। भेदाग्रहे सतीति चेन्न प्रकृतेऽपि तदभावात्। शरीरभेदाग्रहस्तावदस्तीति चेन्न भिन्नजन्म ज्ञानाव्याप्तेः अनुपलब्धपितृकेणापि बालेनातिप्रसङ्गात्। घटकपाल क्षणयोरतथाभावप्रसङ्गाच्च। एकाधारतया नियमइति चेन्न तस्य वास्तवस्य क्षणिकत्वपक्षेऽपि विषमसमयानां क्षणानामभावात् काल्पनिकस्य त्वतिप्रसञ्जकत्वात् शरीरवृद्धेरपि समानदेशताभिमानात्। एतेनाभ्रान्तसमतैकावसायः प्रकृतिविकृतिये ततो हेतुफलस्योपादानोपादेयलक्षणमिति निरस्तम्।

काष्ठस्य तु प्रकृतेर्विकृतिरङ्गारइति कुतोनिश्चितं भवता यावता वह्नेरेवायं विकारः किन्न स्यात्। वह्निसम्बन्धिकाष्ठादेव तदुत्पत्ते र्रिति चेन्न काष्ठसम्बन्धेन वह्नेरेव तदुत्पत्तिरित्यपि किन्न कल्प्यत। पार्थिवं पार्थिवोपादानमिति निश्चयादिति चेत् कुतएतत् सभागेष्वलक्षणेष्वतथा दर्शनादिति चेत् एतदपि कुतः अभ्रान्तसमतैकावसायादिति चेत्। अथ केयं समता नाम यदि साजात्यं

सादृश्यं वा तत् प्राङ्गिरसम् एकसन्तानत्वञ्चेत्तदपि तदुत्पत्तिमात्रञ्चेत् निमित्तनैमित्तिकयोरपि तथाभावप्रसङ्गः। उपादानोपादेयभावश्चेत् कथं तेनैव तदवस्थाप्येत तज्ज्ञानेषु तत्प्रतिसन्धानमेवोपादानोपादेय लक्षणमिति चेन्न आत्माश्रयप्रसङ्गात्। तद्योग्यतेति चेत् सैव केति चिन्त्यं शक्तिविशेषइति चेत् स तावन्न प्रतिक्षणनियतः यथा हि तेन तत्कर्त्तव्यं तथा तादृशापि तत् कर्त्तव्यमित्यपि नियमएव अन्यथा तेन तत् कृतमित्यपि न निश्चीयेत क्षणस्य दुरन्वेयत्वात्। तथा च निरीहं जगज्जायेत आकस्मिकञ्च कार्य्यस्य तादृशत्वमापद्येत तथा च न नियमउपपद्यते नापि प्रतिसन्ताननियतो विशेषाभावात् अस्तु वैजात्यमिति चेन्न अनुपलब्धिबाधितत्वात् नहि शिष्याचार्य्य नीलधियोर्मात्रयापि जातिकृतं विशेषमुपलभामहे। अदृश्यत्वादयमदोषइति चेन्न दृश्यसमवायिन्याजातेरदृश्यत्वानुपपत्तेः उपपत्तौ वा धूमादावपि अवकाशप्रसङ्गात्। तथाचायान्तरधूमएव वह्नेः कार्य्यः स्यात् इति शङ्काकलङ्कितत्वात्। नच धूमसामान्यमग्निङ्गमयेत् एवमेतदाद्यस्यैव तथाभावादिति चेन्न तत्रापि शङ्कायास्तदवस्थत्वात्। तस्मात् कारणस्य वैजात्ये प्रमाणसिद्धे कार्य्यस्य सौसादृश्येप्यवान्तर जातिभेदः कल्प्यते हेतुवैजात्यस्य फलवैजात्यं प्रति प्रयोजकत्वात् अप्रयोजकत्वे तस्याकस्मिकत्वप्रसङ्गात्। कारणसाजात्येऽपि कार्य्यस्य वैजात्यं सहकारिवैजात्ये पर्य्यव-

ष्यतीति युक्तमुत्पश्यामः । अन्यथा प्रकृते परलोकोऽपि न सिद्ध्येत् अचेतनोपादानकमपि ज्ञानमवान्तरजातीयं स्यात्। अचेतनमप्यवान्तरजातीयमुपादानं स्यात् दृश्यजात्यभेदेऽपि किञ्चिदेव निमित्तं भविष्यतीति शङ्कायाः समुत्थापयितुं शक्यत्वादिति ।

अस्तु तर्हि सहकारिभेदान्नियमइति चेत् सएवैकः कर्त्तेति गीयते अथैकएव कर्त्ता नतु तादृक् सहकारिपरम्परेति कुतोविशेषादिति चेन्न तत्कर्तृकत्वं भिन्नकर्तृकेभ्यो व्यावर्त्तते नतु तादृक् सहकारित्वमित्यतोविशेषात् । कुतश्चिदेवमपि स्यादिति चेन्ननु सएव विशेषश्चिन्त्यते नच तत्स्वभावत्वं वा तज्जातीयत्वं वा तत्सहकारित्वं वा तादृक्सहकारित्वं वेत्यतोनातिरिच्यते । तत्र प्रथमोऽसम्भवी द्वितीयोऽतिप्रसङ्गकः । चतुर्थे नियामकाभावः तृतीयएव परिशिष्यते गत्यन्तराभावादिति । अथवा सम्भवन्नपि नायमुपाधिः तत्र तावन्मात्रस्यानिबन्धनत्वात्। तथाहि सर्वज्ञः सप्रत्ययानेककर्तृकतया प्रतिसन्धत्ते न वा आद्ये तत्प्रतिसन्धानादेव प्रतिसन्धातुरेकत्वं सिद्धं ज्ञानाद्भेदश्च धियामस्थैर्य्यस्य सर्वैरेव प्रतीतेः प्रतिसन्धातुः क्षणिकतायाः सर्वज्ञेनाप्यनाकलनात् । अथ न प्रतिसन्धत्ते न तर्हि कार्य्य कारणभावमात्रनिबन्धनं प्रतिसन्धानम् । नह्यस्ति सम्भवो यदन्वयेऽपि यस्यानन्वयस्तत्तावन्मात्रनिबन्धनमिति प्रतिसन्धत्ते न सत्यं तत्प्रतिसन्धानमतोन तावन्मात्रानेककर्तृसिद्धिरिति चेत् तत् किं

सर्वस्यापि विपर्ययः। आहार्य्येण दोषावहइति चेत् निबन्धनाभेदेऽपि कथमक आहार्य्योऽन्यस्तु स्वरसवाहीति वाच्यं भेददर्शनादर्शनाभ्यामिति चेन्न प्रवृत्तिविज्ञानानां भेदस्यासर्वज्ञैरपि दर्शनात्। विषया एव भिन्नाः प्रतिभान्ति न बुद्धयइति चेन्न आसामपि भेदनिश्चयात् विषयभेदाप्रथनेऽपि ज्ञानाभ्यासदर्शनात्। यदि च भेदग्रहेऽपि बुद्धि मावेष तदग्रहोऽभेदारोप उपयुज्यते। पार्थिवतया वृक्षात् काष्ठं काष्ठादङ्गार स्ततोभस्माप्यभेदेन प्रतिसन्धीयेत नचैवम्।

स्यादेतदालयभेदाग्रहात् प्रतिसन्धानमिति चेन्न सह्यहमास्पदं प्रवृत्तिसन्तानादन्यएव वा स्यात्तदन्तःपातिकादाचित्कानेकाहं प्रत्ययरूपोवा। न तावदाद्यः नह्यहमहमिकयामिथः स्वतन्त्रं सन्तानद्वयमनुभूयते सत्यपि वा परस्परमनुपादानोपादेयस्वभावान्न परस्पर प्रत्याकलितार्थानुसन्धानबन्धः तथात्वे वा चैत्रमैत्रादिष्वपि प्रसङ्गः उभयोर्वाभयोपादानत्वे एकमप्यनेकाश्रयमिति किमपराद्धमवयवि संयोगादिभिः। न चालयविज्ञानोपात्तं प्रवृत्तिविज्ञानं न किञ्चिदुपादत्तइति युक्तं तथात्वे निमित्ततामपि न यायादुपादानत्वव्याप्तत्वान्निमित्ततायाः अन्यथा निमित्ततामात्रमुपगम्यैकस्य निवृत्तौ सर्वं सन्तानोच्छेदः अविशेषात्। ओमिति ब्रुवतश्चरमक्षणानामकिञ्चित् करणे प्रज्ञप्तिवृत्तेरसत्त्वप्रसङ्गः। तथा च तत्पूर्वक्षणानामपीत्यनेन विपर्य्यये-

णाकिञ्चित्करं जनदापद्येतेति साधुकार्य्यकारणभावः प्रति सन्धाननिबन्धनसमन्वितः स्यात्। तस्मादन्यदेव निमित्तं किञ्चिदुपाददीत तथा च न प्रतिसन्धानमपूर्वानन्तसन्तान प्रवृत्तिश्च प्रसज्येत एवञ्च।

अशक्तिरनुपादानादन्यदानादनन्तता।

मिथो न प्रतिसन्धिश्च सङ्करेऽनेकसंश्रितिरिति संग्रहः।

नापि द्वितीयः तस्यापि भेदाग्रहः स्वरूपतो वा स्यात् विषयतो वा स्यात्। आद्ये हि पूर्वोहमिति प्रत्ययमात्राद्वा प्रवृत्तिज्ञानेभ्योऽपि वा न तावदाद्यः अहमित्यज्ञासिषम् अहमिति जानामि अहमिति ज्ञास्यामीति त्रैकाल्योल्लेखस्य भेदनिश्चयमन्तरेणानुपपत्तेः. कथञ्चिदुपपत्तौ तदर्थस्यैव प्रतिसन्धिरुचितो न प्रवृत्तिविज्ञानार्थानामपि। नच तेभ्योऽपि भेदाग्रहइति चोक्तमेव। नापि विषयतः सहि स्वाकारो वा वस्त्वन्तरं वा अलीकं वेति। नाद्योदूषितत्वात् न द्वितीयः स्वयमभ्युपगमात् योऽभ्युपगच्छेत् सोऽपि विरुद्धधर्म्माध्यासाद्भेदमिच्छेत् तन्निवृत्तौ च तस्य निवृत्तिम्। न तृतीयः अहमिति विकल्पस्य सवस्तुकतायाः प्रागेव प्रतिपादनात् अवस्तुकत्वेऽपि न तत्र प्रकृतोपयोगिभेदाग्रहसम्भवः सदसदारोपितसत्वारोपितासत्वव्यधिकरणव्यपदेश्यभेदेन षड्विधस्यापि भेदस्याग्रहो अभेदारोपौपयिकतया न तत्र सम्भवतीत्युक्तत्वादिति। अथवा दृष्टानुभवः कालान्तरभाविनीं स्मृतिं जनयेत् तज्जनितो वा संस्कारः सोऽप्यतीन्द्रियः

प्रत्यक्षसिद्धोवा अतीन्द्रियोऽपि तावत् कालावस्थायी सन्तन्यमानो वा अप्रत्यक्षसिद्धोऽपि तदुत्तरबुद्धिधारारूपः तदन्यो वा तद्विशेषो वा विशेषोऽप्यनुभवप्रभवत्वमात्रं वा अनुभवितृसन्तानवैजात्यं वेति। तत्र न प्रथमः। अनुत्पन्नानन्वयध्वस्तयो रविशेषात् नापि द्वितीयोऽन्यः तस्यानुपलब्धिबाधितत्वात् नाप्यनुभवप्रभवत्वमात्रं विशेषः नहि कर्म्मकरकरोपनीतमेव वीजं क्षितिमासाद्याङ्कुरं कुरुते नतु प्रमाद पतितं तथा नीलाद्यनुभवप्रभवसन्तानः पीतानुभवेनैवोपनीयतां नीला द्यनुभवेनैव वेति न कश्चिद्विशेषः। एवञ्चाननुभूतेऽपि स्मरणप्रसङ्गो नवानुभूतेऽपीति। शालिप्रभवस्य वीजस्य शालित्वप्रतिसन्धानवन्नियम इतिचेन्न क्षीरजम्बूरसपायिनीलधवलकलरवजनितविपरीतपारावत वदनियमदर्शनेन तस्याप्रयोजकत्वात् वैजात्यन्तु विशेषो भवेत् यथा क्षीरावसेकादम्लत्वं परिहृत्य माधुर्य्यमुपादायानुवर्त्तमानामलकी कालान्तरेऽपि माधुर्य्यमुन्मीलयति लाक्षारसावसेकाद्वा धवलिमानमपहाय रक्ततामुपादायानुवर्त्तमानं कार्पासवीजं कुसुमेषु रक्तताम्। नचैवं प्रकृतेऽपि जवाकुसुमाद्युपधानसन्निधानेपि तद्रूपताम नादाय धवलिमानमेव सन्तन्वानस्य स्फटिकस्येव ज्ञानस्य विषयोपरागमपगमय्य चिद्रूपतामात्रेणानुवृत्तेः सर्व्वाकारत्वमेव सर्व्वज्ञानानां किन्तु कश्चिदाकारः पटुरन्ये त्वपटवइति तु स्वदर्शनश्रद्धावतो विरुद्धधर्म्माध्यासादपि न भीः। नहि सएव पटुरपटुश्चेति सम्भवति नच स्वसम्विदिति रूपस्या-

पाटवार्थं पश्यामः। निराकारपक्षेऽपि यावानर्थो बुद्धे-विषयः तावति स्फुटैव सा। यत्र तु अस्फुटा नासौ तद्विषयः तथात्वे वा विषयेतरव्यवस्था न स्यात् सांशे त्वयुक्त-मेतदिति दर्शितं प्राक् तस्मादतीन्द्रियः संस्कारः परिशिष्यते। सच न सन्तन्यमान स्तत्रैव स्मृत्यादिप्रसङ्गे प्रवृत्तिसन्ताने फलानवकाशप्रसङ्गात् अन्यत्र संस्कारेणान्यत्र फलेऽतिप्रसङ्गात् परम्परयैकोपादानतानियमे संस्कारान्तर सन्तानेऽपि स्मृतिप्रसङ्गात्। तस्मात् स्वोपादानएवस्मृतिं करोतीति गत्यन्तराभावादापाततिस्तमप्युपेयमेव। तथाच स्मृतेः कालान्तरसम्बन्धात् संस्कारतदुपादानयोः स्थैर्यम-यत्नसिद्धमधगन्तव्यं नीयच्चेति। एतेन धर्म्माधर्म्मलक्षणोऽपि संस्कारो व्याख्यातः तथाच योयः संस्कारः क्वचित् सन्ताने आहितः स तत्रैव फलदानयोग्यो नान्यत्रेत्यादिनिरस्तम् अतिरिक्तसंस्कारपक्षे हेतोर्व्यधिकरणत्वात् विशेष लक्षणस्य च स्वरूपासिद्धत्वात् अविशिष्टोत्तरकार्य्यप्रवाहमात्रस्य च विरुद्धत्वादिति।

नचातीन्द्रियोऽपि संस्कारः सौगतनये सम्भवति तस्य पारोक्ष्यानुपपत्तेः अज्ञानत्वे ज्ञानोपादानकत्वायोगात् सन्तानान्तरत्वेन ज्ञानस्यापि पारोक्ष्ये तदन्तःपातिनः स्मृतिसुखादेरपि तथाभावप्रसङ्गादिति तदिदमुक्तरूपं प्रति-सन्धानं निमित्तवत्तया व्याप्त मनिर्मित्तकत्वे नियमानुपपत्ते स्तच्चानेककर्तृकत्वे नास्तीति व्यापकानुपलब्ध्या विपक्षा-

भिवर्त्तमानं तत् निमित्तवत्येककर्तृकत्वे विश्राम्यतीति प्रतिबन्धसिद्धिः। एवं सति चान्वयेऽपि नर्त्तकीभ्रूलताक्षेपादौ द्रष्टव्यः सैव हि भ्रूलता तएव वा परमाणवः प्रतिसन्धीयमाना माभ्रामनिमित्तत्वेनावस्थिता। विरुद्धधर्म्मविरहविषयत्वेन तु विशेषणीयमत्र प्रतिसन्धानमन्यथा यएव बालस्त्वया दृष्टः सएव युवा मया दृश्यतइत्यनेनानैकान्तात्। ननु सिद्धमिदं विशेषणं देहस्यैव चेतनत्वात् मैवं देहत्वभूतत्वमूर्त्तत्वरूपादिमत्त्वादिभ्यः नच भूतानां समुदायपर्य्यवसितं चैतन्यं प्रतिदिनं तस्यान्यत्वे पूर्व्वपूर्व्वानुभूतस्यास्मरण प्रसङ्गात्ल्यै। नच प्रत्येकपर्य्यवसितं करचरणाद्यवयवविगमे तदनुभूतस्या स्मरणप्रसङ्गात् देहस्याचेतनत्वे बालस्य प्रथममप्रवृत्तिप्रसङ्गाच्च इच्छाद्वेषावन्तरेण प्रयत्नानुपपत्तेः इष्टाभ्युपायताप्रतिसन्धानं विना चेच्छानुपपत्तेः। इह जन्मन्यननुभूतस्य प्रतिबन्धस्यास्मृतौ प्रतिसन्धाना योगात् जन्मान्तरानुभूते चानुभवितरि भस्मसाद्भूते अन्येन स्मरणा योगात् अनुभवादीनां प्रवृत्त्यन्तानाञ्च कार्य्यकारणभावस्य इहैव जन्मनि निश्चितत्वात् तथाच तदभावे तदभावस्य सुलभत्वात् अन्यथा स्वस्वप्रसङ्गा। अतएव नेन्द्रियाणि चेतयन्ते दर्शनस्पर्शनाभ्या मेकार्थग्रहणाच्च। नच मनस्तथा तस्य करणत्वेनैवानुमानादिति प्रतिबन्धसिद्धिः परदेशात्मसिद्धिश्च अनादिश्चासौ वीतरागजन्मादर्शनात् अनन्तश्च सतोऽनादित्वात् द्रव्यञ्च समवायिकारणत्वात् विभुश्च नित्यद्रव्यत्वे

सत्यमूर्त्तत्वात् अमूर्त्तञ्च निष्क्रियत्वात् निष्क्रियञ्च नित्य द्रव्यत्वे सत्यस्मदादिप्रत्यक्षत्वात् प्रत्यक्षधर्म्माश्रयत्वाच । तर्का-श्चात्र भवन्ति आदिमत्त्वे प्रथमप्रवृत्त्यनुपपत्तौ सर्व्वदैवा-प्रवृत्तिप्रसङ्गः । सान्तत्वेऽनादेः सत्त्वानुपपत्तिप्रसङ्गः । अद्र-व्यत्वे निर्गुणत्वप्रसङ्गः अविभुत्वे दहनपवनादेः क्रियानुपपत्ति-प्रसङ्गः । अद्रव्यत्वे निर्गुणत्व प्रसङ्गः अविभुत्वे दहनपवनादेः क्रियानुपपत्तिप्रसङ्गः । नच संयुक्तसंयोगात् तदुत्पत्तिः साक्षात् क्रियाद्वारकस्य तस्याभावात् अतथाभूतस्य तद्धेतुत्वेऽतिप्र-सङ्गात् । मूर्त्तत्वे नित्यस्यास्मदादिप्रत्यक्षधर्म्मानाधारत्वप्रसङ्गः विशेषगुणवतश्चारम्भकत्वप्रसङ्गः सक्रियत्वे मूर्त्तत्व प्रसङ्ग इति शास्त्रार्थसंग्रहः । अणुरेवासौ विज्ञानासमवायिकारण संयोगाधारत्वात् मनोवत् अणोरणीयांसमणोरपीति बाधवि-रोधाविति कश्चित् तदयुक्तम् आत्मन्यविभौ मनसोऽणुत्वा-सिद्धेः तत्संयोगक्रमादेव क्रियाक्रमोपपत्तेः आगमस्तु मह-तोऽपि महीयांसमिति प्रथमपदमपहाय उपन्यस्तस्तदलमनेन ।

स्यादेतत् सिद्धोऽप्ययमीदृशो हेयएव आत्मदर्शी हि तदुप कारिणि रज्यते तदपकारिणञ्च द्वेष्टि रागद्वेषौ मूलं संसा-रस्य यस्तु न तं पश्येत् नासौ तदुपकारापकारिणमपि ततो न रज्येत न द्विष्यात् न संसरेदिति जाङ्गलिकेन नैर्विण्य-मस्य मुमुक्षुणापि नैरात्म्यमेव भावनीयमिति चेन्न अनात्म-दर्शिनो मुमुक्षुत्वव्याघातात् । नह्यात्मानमप्रति सन्धाय कश्चन दुःखं हातुमिच्छेत् सुखं वाप्तुम् । यथा स्वर्गापवर्ग-

फलभागिना भवितव्यमित्यभिप्रायस्य यावदभियोगमनुवृत्तेः अननुवृत्तावभियोगनिवृत्तौ फलासिद्धेः। इयञ्च नैरात्म्य-दृष्टिर्नास्तिक्यं दृढयेत् तच्च प्रबलविषयतृष्णासंप्लुतमननुसरन्तं प्रसुवीत। नचेदेवं कुतो यावज्जीवेत् सुखं जीवेदित्यादयो निःशङ्कप्रलापाः। यत्तूक्तमुपकारिणि रज्येदपकारिणि द्विष्यादिति तदेवमेतत् यो हि मोक्षमुपकारं मनुते स तद्धेतौ रक्तस्तमुपाददान स्तत्परिपन्थिनं द्वेषादलं प्रत्ययाद्वा परिहरन्नेव समीहितं समासादयेन्नतु विपर्य्ययात् यश्च भोगं सोऽपि तथेत्यनुकूलमेव प्रतिकूलत्वेन गृहीतं मन्दैः। अन्यत्राप्यनु रज्येदन्यत्रापि द्विष्यादिति तु न दृष्टं गोवैद्यकेऽपीति। तथापि दुःख हेतुत्वादिन्द्रियादिवदसौ हीयतामिति चेत् यादृशो दुःखहेतु स्तादृशो हेयएव सोपाधिश्च तथा निरुपाधिरपि हीयतामिति चेत् अशक्यत्वान्निष्प्रयोजनकत्वाच्च। नहि तस्य हानं विनाशो नित्यत्वात् नापि विप्रयोगोव्यापकत्वात् नाप्यप्रतिपत्तिः यथा यथा तदर्थं यत्न स्तथा प्रतिपत्तेः प्रत्यापत्तेः उपेक्ष्यत इति चेत् कृतैवैतावन्तं कालमुपेक्षा तथापि तज्ज्ञानासिद्धेः निष्प्रयोजनश्चैतत्। सोपाधेर्हि विनाशो दुःखहानाय निरुपाधेस्तु किमर्थम्। पुनः सोपाधिशङ्कयेति चेन्न बीजाभावात् कुतः पुनरुपादेयः। तथा सति भावनाक्रमेण निःश्रेयस सिद्धेः किमस्योपादानं विवेकः कुत अनात्मनः शरीरादेः किं पुनरत्र प्रमाणं न्याय आम्नायश्च शरीरमेव हि तावन्मूर्द्धाभिषिक्तमनात्मानं मन्य-

मानस्य तदुपादाय तदनुकूलत्वेनोक्तविषया तृष्णा विजृम्भते तथा च तत् प्रतिकूलविषये द्वेषः। नचैतत् केवलात्मदर्शिनः सम्भवति निरुपाधेः पुर्त्रवित्तलोभाभावात् तैरनुपकार्य्यत्वात् छेदक्लेशदाहशोषाद्यनुपपत्तेः विधिनिषेधानधिकाराच्च जन्मजातिवयोवित्तसंस्काराद्युपग्रहेण ततः प्रवृत्तेः ततोनात्मन्यात्मग्रहोनिदानं संस्कारस्य मिथ्याज्ञानस्य तत्त्वज्ञानान्निवर्त्तते तच्च श्रवणमननादि क्रमेणोत्पद्यते कारणनिवृत्तौ च कार्य्यं न जायते उत्पन्नस्य धर्म्माधर्म्मप्रचयोभोगेन चीयते इति न्यायार्थसारसंक्षेपः। आम्नायसारसंक्षेपस्तु अशरीरं वावसन्तम् इत्यादि। तदप्रामाण्यं प्रपञ्चमिथ्यात्वसिद्धान्तभेद तत्त्वोपदेशपौनः पुन्येष्वनृतव्याघातपुनरुक्तदोषेभ्यः इति चेन्न सतात्पर्य्यकत्वात् निष्प्रपञ्च आत्मा ध्येयोमुमुक्षुभिरिति तात्पर्य्यं प्रपञ्च मिथ्यात्वश्रुतीनां आत्मनएवैकस्य ज्ञानमपवर्गसाधनमिति अद्वैत श्रुतीनां दुरूहोऽयमिति पौनःपुन्यश्रुतीनां वहिःसङ्कल्पत्यागो निर्म्ममकत्वश्रुतीनां आत्मैवोपादेय इत्यात्मश्रुतीनाम् गारुडवदनुष्ठाने तात्पर्य्यं प्रकृत्यादिश्रुतीनां तन्मूलानाञ्च सांख्यादिदर्शनानाञ्चेति नेयम्। अन्यथा "जैमिनिर्यदि वेदज्ञः कपिलोनेति का प्रमा। उभौ च यदि वेदज्ञौ व्याख्याभेदस्तु किं कृतः"। प्रामाण्यन्तु तस्य कुतइति चेन्न आप्तोक्तत्वात् तदसिद्धमिति चेन्न विश्वस्य कर्त्तुरनुमानसिद्धत्वात्। विवादाध्यासितकर्तृकं सकर्तृकं कार्य्यत्वात् इति विशेषविरुद्धोऽयं हेतुरिति

चेन्न विरोधिविशेषाप्रतीतौ विरोधस्य प्रत्येतुमशक्यत्वात् तत्प्रतीतौ वा सहोपलम्भनियमेन विरोधस्य बाधितत्वात् सर्व्वथैवाप्रतीतस्यापि न्यायगोचरत्वमपि कथमिति चेन्न स्वार्थानुमानसिद्धत्वात्। ततोऽपि कथं सिध्यतीति चेत् अप्रतीतप्रत्यायकं प्रमाणं नत्वप्रतीतेन विरोधः शक्यनिश्चय इत्यतो विशेषात्। का पुनरस्यानुमानस्यैवं भूतप्रत्यायने शक्तिरिति चेत् आकाङ्क्षानुपपत्तिनियमभेदेन त्रिविधः सम्बन्धः तत्राकाङ्क्षानियमाभ्यामन्वयी अनुपपत्तिनियमाभ्यां व्यतिरेकीति विभागः। अस्तु तर्हि सत्प्रतिपक्षत्वं शरीराजन्यत्वादिति चेन्न असमर्थविशेषणत्वेनासिद्धभेदस्यातुल्यबलत्वात्। असिद्धिपरिहारेण विशेषणं समर्थमिति चेन्न एकामसिद्धिं परिहरतो द्वितीयापत्तेः अन्यथा विवादाध्यासितं नादृष्टहेतुकं शरीराजन्यत्वादित्यनेनापि जन्यत्वस्य सत्प्रतिपक्षप्रसङ्गात्। तर्हि तर्कापरिशुद्धिरस्तु शरीरनिवृत्तौ बुद्धिनिवृत्तेः। बुद्धिनित्यत्वे शरीरानुपयोगात् प्रयत्न नित्यतायां ज्ञानेच्छानुपयोगादिति चेन्न प्रयत्नस्य द्विधर्म्मकत्वात् सद्विज्ञानकार्य्यौ ज्ञानैकविषयकत्व कार्य्यत्वं तत्र कार्य्यत्वनिवृत्तौ कारणतया ज्ञानं मापेक्षिष्ट विषयार्थन्तु तदपेक्षा केन वार्य्येत। नच तस्य स्वरूपेण विषयप्रवणत्वं ज्ञानत्वप्रसङ्गात्। अयमेव हि ज्ञानात् प्रयत्नस्य भेदो यदयमर्थोप्रवण इति। नच निर्विषयएवास्त्विति वाच्यम् अकारणत्वप्रसङ्गात्। तथा च सोऽप्येकः कथं सिध्येत् मासैत्सीदिति चेन्न तत्र साधनस्य निर्द्दोषत्वात् दोषे वा सएव बाधः

सर्वविषयत्वात्तस्य किं विषयनियमार्थेन ज्ञानेनेति चेत् तस्य स्वरूपेणार्थप्रवणत्वाभावात् भावे वा ज्ञानत्वप्रसङ्गादित्युक्तम् । जीवनपूर्वप्रयत्नवद्विषय व्यवस्था भविष्यतीति चेन्न तस्य जात्यन्तरत्वात् एकजातीयत्वे तस्यापीच्छापूर्वकत्वप्रसङ्गात् । इच्छाया वा तत्कारणत्वं न स्यात् तामन्तरेणापि तज्जातीयस्योत्पत्तेः । तस्मात् क्षतिजातीयस्य ज्ञानेच्छाभ्यामेव विषयव्यवस्था स च साधयितुमिष्टइति । तार्किकगर्ववाहस्त्वाह ननु सपक्षविपक्षयोर्दर्शनादर्शनमात्रस्य शतशः प्रवृत्तावपि व्यभिचारोपलम्भात्तल्लक्षणस्यानुपलब्धव्यभिचारस्यापि तथाभावसम्भावनाक्रान्तत्वाल्लक्षणान्तरं प्रतिबन्धस्य वक्तुमुचितम् । तत्र उपाधिविरहो वा स्यात् तदुत्पत्तिर्वा विपक्षबाधकं वेति संक्षेपः । तत्र न प्रथमः अदृश्योपाध्यभावनिश्चये अभ्युपायाभावात् दृश्येनैवोपाधिना भवितव्यमिति नियमानुपपत्तेः । नापि द्वितीयः साध्यान्वयव्यतिरेकाभ्यां निश्चीयेत । तौ च दृश्यशरीरवच्चेतननिष्ठौ वा स्याताम् उपाधिविधुरदृश्यादृश्यसाधारणचेतननिष्ठौ वा । न प्रथमः विटपादौ व्यभिचारात् प्रकृतासिद्धेश्च । न द्वितीयः घटादिकार्य्यव्यतिरेकसमये तत्प्रयोजक कुलालादिव्यतिरेकवददृश्य चेतन मात्रव्यतिरेकस्य निश्चेतुमशक्यत्वात् । नहि कुलालादिदृश्यव्यतिरेके तस्यावश्यं व्यतिरेकोविटपादावपि तथाभावप्रसङ्गात् । तर्हि सन्तानानां तवानुमान मपि कथं कुम्भकारव्यतिरेके दृश्यादृश्यसाधारणचिन्मात्र-

व्यतिरेकासिद्धिवत् स्वचित्तव्यतिरेकेऽपि कर्म्मं प्रतिचिन्मात्र-व्यतिरेकासिद्धेरिति चेन्न वादान्तरत्वात् यदापि तत्प्रस्तावः तदापि स्वदेहे स्वपरसान्तानसाधारण चिन्मात्राविनिर्भाग-वृत्तिदृश्यदेहमात्रस्यैव प्रत्यक्षानुपलम्भाभ्यां कर्म्मं प्रतिकार-णत्वप्रतीतेः परचित्तस्यापि कारणत्वं प्रतीयतइति । नापि तृतीयः विपक्षे बाधकाभावात् देशकालनियमादीनां स्वका-रणायत्त सन्निधिना कादाचित्केन प्रतिनियतशक्तिना का-रणेनाचेतनेनाप्युपपत्तेरिति उत्तानोल्लपितमेतत् कल्पत्रय-स्याप्युपपत्तेः । तथाहि चत्वारोहि जगति भावाभवन्ति विरोधी वहिर्वृत्तिः सहवृत्तिरन्तर्वृत्तिश्चेति ननु पञ्चमः प्रकारः शङ्कितुमपि शक्यः विरोधाविरोधयोः साहित्यासा-हित्ययोराधिक्यानाधिक्ययोः परस्परनिषेधरूपत्वात् । तत्र द्वयमत्र सापाधित्वेन शङ्कनीयम् अकार्य्यस्यैवाकार्य्यस्यापि वा सकर्तृकत्वप्रसङ्गात् । नचेदमिष्टम् अकार्य्यस्य कारक-वत्ताभावेण सहज विरोधे कारकविशेषस्य कर्त्तुरनवका-शात् । नापि तृतीयः तुल्ययोग क्षेमयोरविशेषात् व्यभि-चारशङ्कानाधायकत्वाच्च । चतुर्थस्तु स्यात् सोऽपि न शरी-रान्तर्भूतवृत्तिः चेष्टमानशरीरहेतुकस्यापि कस्यचिदचेतन-पर्वकत्वप्रसङ्गात् । नचेदमिष्टं चेष्टाचेतनयोरविनाभाव भ-ङ्गप्रसङ्गात् । नापि सहवृत्तिः देहस्यानुपाधित्वे तस्यानुपा-धित्वात् तयोस्तुल्ययोगक्षेमत्वात् अतथाभावे सहवृत्तिनि-यमानुपपत्तेः । शरीरस्य च नोपाधित्वं कर्तृव्यापकत्वात्

तत्कार्य्यत्वस्योपाधेर्विद्यमानत्वात्। नाप्यायतनतया तथा-भावो भोगोपाधित्वात्। नाप्युपकरणप्रापकतया साक्षात् प्रयत्नानधिष्ठेयता उपाधित्वात् अन्यथापि तत्प्राप्तेरिति। नाप्यधिकवृत्तिः शरीरविनाकृतस्य कर्त्तुः स्वयमनभ्युपग-मात्।

अस्तु पाक्षिकोऽभ्युपगमः तेन न कार्य्यत्वमात्रात् कर्त्तृ-मत्त्वसिद्धिः शङ्कितोपाधित्वात्। नचोपाधेरेव तत्सिद्धिः तस्य स्वयं सन्दिग्धासिद्धत्वादिति चेत् उभयथाप्यशरीरिकर्त्तृव्य-वस्थितिनियमात्। किन्तु कथञ्चिदुपाधिमादाय स व्यव तिष्ठतां यद्वा कार्य्यत्वमेवेति सन्देहः परिशिष्यते गत्यन्तरा-भावात् सोऽपि निवार्य्यते। न तावद्देह व्यतिरेकेणानित्य-ज्ञानसम्भवः तयोः कार्य्यकारणभावनिश्चयात् ततो नित्यञ्च-चेत् ततः सर्व्वविषयञ्च नियतविषयतायाः अनित्यत्वेन व्याप-नात् विषयनियमस्य सामग्रीशक्तिसमवधानाधीनतया नि-त्यात्तस्याः स्वव्याप्यमुपादाय निवर्त्तमानाया अनित्ये वि-श्रामात् सर्व्वगोचरे च ज्ञाने सिद्धे चिकीर्षाप्रयत्नयोरपि तथाभावः तदेकविषयत्वात्तयोः। तथा च कश्चिदुपाधिमा-दायाशरीरपूर्व्वकमपि किञ्चिदेव कार्य्यं कर्त्तृपूर्व्वकं भविष्य-तीति शङ्कापिशाच्याः क्वावकाशः। एवमन्यत्राप्यनया दिशो-पाधिशङ्का निराकरणीयेति निरुपाधिसम्बन्धसिद्धिः। विप-क्षसम्भवे च साधनप्रयुक्तसाध्यसद्भावसिद्धौ साध्याभावप्रयुक्त-साधना भावलक्षणस्य व्यतिरेकस्यापि सिद्धेर्न तदर्थम् पृथ-

गपेक्षेति । द्वितीयेऽपि श्रवणसम्पुटमवधाय कलकलस्त्यज्य-
ताम् । तथाहि दण्डादिषूदासीनेषु दृश्योऽदृश्योवा कारक-
व्यापाराविनिर्भागवृत्तिस्तेनौ निवृत्तौ न वेति त्वमेव प्र-
ष्टव्यः । नचेत् कुतः कारणाद्युदासते निवृत्तस्ते त् कथमदृश्य
व्यतिरेक संशयः तथापि दृश्यास्यान्वयः तादृशस्य व्यतिरेकोऽ-
प्युपयुज्यत इति चेत् कोऽत्र विप्रतिपद्यते कारकप्रयोक्तुरुभय-
थापि तुल्यत्वात् । देही तादृशइति चेत् कोऽस्यार्थः किं देह
द्वारैव कारकाणि प्रयुङ्क्ते चेतनः आहो देहं प्रजुञ्जान-
एवेति । न पूर्व्वः देहस्यापि कारकतया देहान्तरप्रयोज्य-
तायामनवस्थापातात् । न द्वितीयः विषशकलचालनादौ
व्यभिचारात् । देहं धारयन्निति चेत् सोऽयं देहोधार्य्यः
किं कारकतया तत्कारकान्तरप्रयोगार्थम् अथ स्वकर्म्मोपा-
त्ततामात्रेण । प्रथमे न विवादः देहस्य क्वचित् कार्य्यकार-
णतयाधिष्ठाननियमात् यत्रापि न तत्कारकं तत्रापि तद-
धिष्ठेयमिति तु कस्तेनोऽभिदध्यात् । द्वितीयेऽपि यः सा-
क्षादधिष्ठातुमशक्तः स साक्षादधिष्ठेयमुपादाय तत्प्रजुञ्जीत
नत्वेकस्य साक्षादधिष्ठानयोग्यम् अन्यस्यापि तथेति नियमः
देहएव व्यभिचारात् तृतीये त्वजागलस्तनकल्पः कार्य्योनो-
पयुङ्क्तां स्वविवेचने स्वविवेशयति तत् यथा धूममात्रं प्रति
तार्णदहनान्वयव्यतिरेकयोरालोकवत्तेति । यदि चाका-
रकस्य तत्प्रयोगद्वारकस्यापि देहस्यावश्यमपेक्षा स्यात्
यएव कुलालकायवान् घटस्य कर्त्ता सएव करभशरीरवा-

नपि दण्डादीन् प्रयुञ्जीत। न खलु स्वकर्म्मोपात्ततामात्रेण करभकुम्भकार शरीरयोः कश्चिद्विशेषः। कार्य्यविशेषे कार्यविशेषोऽनुपयोग्यपेक्षणीयइति चेत् तन्न कार्य्येऽनुपयुक्तश्चावश्यापेक्षणीयश्चेति व्याघातः। अव्याघाते वा कुम्भे कर्त्तव्ये करभशरीरमप्यवश्यमपेक्षणीयमविशेषादिति तस्मात् सन्दंशत्रदयः पिण्डवत् कारकप्रयोजकतयैव शरीराधिष्ठाननियमा नतु शरीरत्वेनैव नच शरीरस्य सर्वत्र कारकत्वं प्रयोजकत्वं वेति। एवन्तर्हि न प्रतिनियतदेहाधिष्ठातृसिद्धिः अङ्कुरादिकारकाधिष्ठातृसिद्धिरितिचेन्न वादान्तरत्वात् यदापि तत्प्रस्तावः तदापि न कार्य्यमात्रेण कारकाधिष्ठानमात्रेण वा तदनुमानं ततः कर्तृमात्रसिद्धेः किन्तु हर्षभयशोकस्मितादिलिङ्गैः स्वात्मनीव तैर्भोक्तुरनुमानमिति न किञ्चिदेतत्। तृतीयेऽपीर्षावस्था णिति चक्षुषी निमील्य न्यायानुसारः श्रूयताम् इह जगति नास्त्येव तत्कार्य्यनाम यत् कारकचक्रमवधीर्य्यात्मलाभमासादयेदित्यविवादं तच्च सर्वत्रैतदुपहितमर्य्यादम् अन्यथा तल्लक्षणव्यवस्थानुपपत्तेः। तथाहि आधेयाधारकोपहितमर्य्यादमधिकरणस्य रूपमाधारत्वात्। अपनेयापगन्तृकारकोपहितञ्च रूपमपादानस्य तदवधित्वात्। करणो भूतकर्म्मोपहितञ्च रूपं सम्प्रदानस्य तदभिप्रेतत्वात्। कारणोपहितञ्च रूपं कर्म्मणः तद्व्याप्यत्वात्। कर्त्रुपहितञ्च रूपं करणस्य साक्षात्तद्व्यापारविषयत्वात्। समस्तकार-

कोपहितञ्च रूपं कर्त्तुस्तत्प्रयोजकत्वात् ज्ञानचिकीर्षाप्रयत्नाधारत्वव्यवस्थितेश्च न चक्रकेतरेतराश्रयदोषः । एवं सति कर्तृव्यावृत्ते स्तदुपहितसीमसमस्तकारकव्यावृत्तावकारककार्य्योत्पत्तिप्रसङ्ग इति स्थूलः प्रमादः । भवेदेवं यदि कर्त्ता कारकमात्रस्य व्यापिः स्यात् । सैवतु कुत इति चेत् कुतः पुनरव्यापिः नहि षड्भ्योऽन्यत् कर्त्रनुपहितं कारकमस्ति । नचैषामेव कर्त्तृप्रधानशून्यं लक्षणमस्ति एकैकमपोह्यशेष शेषतः कार्य्य सम्भावनायां सर्वापोहसम्भावनाप्रसङ्गात् । नच समस्तविशेषापोहे सामान्य स्थितिः यतः षट्कव्यावृत्तावपि कारणमात्रतः कार्य्यप्रत्याशा स्यात् एकप्रवृत्तौ तु सर्वप्रवृत्तिरप्रत्यूहा शृङ्खलाबन्धेन व्यवस्थिते ।

अथ मतं तवैवेयं प्रक्रिया अस्माकन्तु कार्य्येणानुविहितभावा भावं चेतनं वा चेतनं कारकमुच्यते संहतौ च सर्वं स्वप्रधानमुपादाने तरव्यवस्था तु कथञ्चिदिति चेन्न तथापि निरुपादानत्वप्रसङ्गात् । जातिप्रतिनियतहेतुत्वेन तदवश्यमुपेयं तस्य प्रमाणसिद्धतयापह्नोतुमशक्यत्वादिति चेन्न उपादानमात्रस्य तद्धेतुत्वे निमित्तवैचित्र्येऽप्येक जातीयत्वप्रसङ्गात् । निर्निमित्तं वा प्रसज्येत उपादानादेव तथा विधात् तदुत्पत्ते र्न किञ्चिदेतत् । कस्मात् सामग्र्याः सर्वसम्भव इति चेत् कुत एतत् निमित्तसहितस्यैवोपादानस्य प्रत्यक्षानुपालम्भाभ्यां कारणत्वावधारणादिति

चेन्न दृश्यमात्रविषयत्वात्तयोः । दृश्यत्वं तस्य कथञ्चिदविवक्षितमिति चेन्न चेतनेऽपि तथा किन्न स्यादिति तस्मादुपादाननिमित्तयोर्यथा परस्परसहितयोरेककार्य्ये शक्तिस्तथाचेतनाचेतनयोरपीत्येकनिवृत्तावितर निवृत्तिप्रसङ्गः । अपि च मृत्पिण्डदण्डादिषु स्वव्यापारे पारतन्त्र्यं तावत् नियमेनोपलभ्यते ।

तदिदं दण्डादिमात्रानुबन्धं वा स्यात् अदृष्टविशेषोपग्रहानुबन्धं वा अचैतन्यमात्रानुबन्धं वेति निपुणं निरूप्य । तत्र न प्रथमः वेमादीनां स्वातन्त्र्यप्रसङ्गात् । तेषां वेमादित्वमात्रानुबन्धमिति चेन्न दण्डादीनां स्वातन्त्र्यप्रसङ्गात् नचैतत् कार्य्यविषयनियतं गवाभ्याजनादौ दण्डादीनां स्वातन्त्र्यप्रसङ्गात् । न द्वितीयः तस्य जाति विशेषानियतत्वे घटार्थमपि कदाचित्तेषां स्वातन्त्र्यप्रसङ्गात् तन्नियतत्वे सएवोच्यताम् । नच घटपटशकटकटाहादिगतं दण्डवेमवासी सन्दंशादिगतं वा सामान्यमुपलभेमहि । अस्त्यसौ यतः शरीरि कर्तृत्वानुमानमिति चेन्न घटद्वारैव तथाभावात् । अस्तु वा संस्थान विशेषः नच सएवात्र निबन्धनं तस्याभावेऽपि जलादीनाञ्चेतनप्रेर्य्यत्वदर्शनात् । नच शरीरप्रेर्य्यं यत्तदेव चेतनप्रेर्य्यमिति नियमः शरीर स्यैव स्वातन्त्र्यप्रसङ्गादित्युक्तप्रायम् । तस्मादचैतन्यमात्रनिबन्धन मेतद्दण्डादिषु तथाच परमाण्वदृष्टादिष्वपि तस्य भावात्तथाभावो दुर्वारः ।

तदेतत् कार्य्यं कारणवत्तया व्याप्तं सा च विपक्षेऽसम्भवन्ती स्वव्याप्यानुपादाय व्यावर्त्तमाना स्वपक्षे विश्राम्यतीति उभयमुखो प्रतिबन्धसिद्धिः । कः पुनरयं प्रतिबन्धः स्वाभाविकः सम्बन्धः कः स्वाभाविकार्थः निरुपाधित्वं कः पुनरुपाधिः साध्यप्रयोज्यं निमित्तान्तरं किं वास्य लक्षणं साधनाव्यापकत्वे सति साध्यव्यापकत्वे सति साध्यव्याप्यत्वं कथं पुनरेवंलक्षणकोऽर्थः प्रत्येतव्यो निराकर्त्तव्यो वा विपक्षयोरविरोधबाधकाभ्याम् किं बाधकम् अन्वयव्यतिरेकविषय भूयोदर्शनसाहायकमाचरन्नुत्तरदुस्तर्कः । स चात्माश्रयेतरेतराश्रय चक्रकानवस्थानिष्टप्रसङ्गभेदेन पञ्चविधोऽपि क्वचिद्व्यभिचारं निराचक्षाणं क्वचित्तन्निबन्धनमुपाधिमवधूनयन् सहायीभवतीति फलतो न कश्चिद्विशेषः । तदुदाहरणानि चात्रैव यथायथं परिचेयानीति ।

अथ न्यायदुर्बलस्य प्रतिबन्धीकरणं यदुनैवं शशविषाणस्यापि सिद्धिः स्यात् दृश्यमात्रनियतत्वात् प्रत्यक्षबाधस्य । नच दृश्यत्व निवृत्तेरेव विषाणत्वनिवृत्तिः अव्यापकनिवृत्तावव्याप्यनिवृत्तेरयोगात् विषाणगतकार्य्यत्वप्रयुक्तत्वाच्च दृश्यत्वव्याप्तेः तेन तन्निवृत्तावपि नाकार्य्यस्य शृङ्गस्य निवृत्तिरिति । सत्यं सहार्थसिद्धाकृतकृत्यस्य न परिभ्रंशाय निष्प्रयोजनत्वात् । तथापि सम्भावितस्या कीर्त्तिभिया नोपेक्षामर्हति प्रतिबन्धिरिति चेत् तर्हि साक्षेपीरिय मुच्यते । तर्हि अयं तः गूमीयशृङ्गसाधनप्रवृत्तइदं प्रष्टव्यः किन्ते

विषाणशब्देनान्यदेव किञ्चिद्विवक्षितं रोमादिविषाणजातीयं वा द्रव्यम्। प्रथमे सिद्धसाधनं लोकविरोधश्च लोके तद्विपरीतस्यैवार्थस्य विषाणशब्देनाभिधानात्। द्वितीये त्वन्वयव्यतिरेकाभ्यां संस्थानविशेषकार्य्यत्वमेव व्यवहारलक्षणाया-स्तदभिव्यक्तेः कथं तद्रहितेषु परमाणवादिषु तत्सम्भवः सम्भवे वा न कथं तत्र घटत्वादिकमपि। ओमिति ब्रुवतः कथं न जातिसङ्करप्रसङ्गः कारणं विना कार्य्याभावप्रसङ्गो वा नवा अन्वयव्यतिरेकौ कार्य्यकारणभावे प्रमाणमिति सर्वं समाकुलमाकुलमतेः। तस्मादतीन्द्रियं नित्यं वा विषाणमेव न भवति यच्च विषाणं तच्च प्रत्यक्षबाधितमिति कुतस्तदनुमानावकाशः।

एवं तर्हि नित्यं ज्ञानमित्यपि व्याहतम् इन्द्रियादिविकारमात्र व्यक्तिव्यङ्ग्यत्वाज्ज्ञानत्वसामान्यस्येति चेन्न अतद्भावत्वादतदाक्षेपकत्वाच्च। नहि मातृत्वस्य बन्ध्यात्ववन्नित्यत्वस्याभावे ज्ञानत्वमचेतनानामपि चेतनत्वप्रसङ्गात्। नापि नित्यत्वं ज्ञानत्वाभावमाक्षिपेत् ज्ञानत्वेनाविरोधात् विरोधमूलस्य विपक्षबाधकस्याभावात् दर्शनादर्शनयोश्चार्थग्रहणत्वोपाधिग्रस्तत्वात् रूपत्वानित्यत्वयोश्चक्षुर्मात्रग्राह्य व्यक्तित्ववत्। नचेन्द्रियादिविकारो ज्ञानत्वाभिव्यक्तिहेतुः अर्थ ग्रहण व्यक्तिमात्रस्यैव तन्निरपेक्षस्यातथाभावात् एतदनपेक्षस्य तु तस्यातिप्रसञ्जकत्वात्। अथ चक्षुरुपद्रवाः केवलस्य कर्तृत्वे विश्वस्य वैश्वरूप्य व्याघातः सततोत्पत्तिप्रसङ्गश्च अदृष्टापेक्षा-

याश्च कल्पनागौरवं तत एव तदुपपत्तेः स्वार्थं प्रवृत्तावनीश्व-रत्वप्रसङ्गः परार्थं प्रवृत्तावदुःखमयसर्गप्रसङ्गः। एवमेव प्रवृ-त्तावचैतन्यम् एकत्वे प्रमाणाभावः अनेकत्वे त्वसार्वज्ञ्यं प्रति-नियतसामग्रीविरुद्धत्वादित्यादयः। तत्र कारणचक्रस्यैकदेश-मुपादाय शेषवैयर्थ्यप्रसञ्जने सर्ववैयर्थ्यप्रसङ्गः। अन्वयव्यतिरेका-भ्यां सिद्धकारणभावस्य न वैयर्थ्यमिति चेत् अनुमितकारण-भावस्याप्येवं प्रमाणसिद्धत्वाविशेषात्। यच्च यदर्थं कल्पितं तस्य तेनैव विफलीकरणे सर्वत्रादृष्टमुपादाय दृष्टवैफल्य प्रस-ङ्गः। तथाच तदपि न स्यात् प्रमाणाभावात् दृष्टे नह्यदृष्ट मुत्रीयते परार्थञ्च प्रवृत्तिः स्वार्थाभावात्। नच दुःखसृष्ट्या कारुण्यापवादः जनकाध्यापकचिकित्सकादिषु व्यभिचारात्। अथ दोर्जन्यादेव किं नेवमिति चेन्न दोषाभावात् तदभावश्च मोहाभावात् तदभावोऽपिसर्वज्ञत्वादिति। एकद्व्यणुककारी तु परमाणुमदृष्टमुपकार्य्यद्व्यणुकादि भोगपर्य्यन्तं द्रव्यादिप-दार्थषट्कञ्च जानाति न नमित्यविवादम् एषामुपादाना-दिरूपत्वात् अन्वयव्यतिरेकभावापरिज्ञाने नोपादाना-दिपरिज्ञानानुपपत्तेः। यश्च तज्जातीयमेकं कर्त्तुं ज्ञातुं वा समर्थः स तज्जातीयं सर्वमेवेतिनियमः। सामर्थ्यस्य जाति नियतत्वात् केवलं समर्थोऽपि सहकार्य्यसन्निधेर्न कुर्य्यात् न जानीयात् तत्र प्रथम नियतएव कार्य्यस्य देशकालनियमो-पलम्भात्। द्वितीयस्तु सम्भवेदपि यदि कार्य्यमस्य ज्ञानं स्यात्। नच तत्तथाकार्य्यमिति चेत्शरीराद्याये तदाश्रितानां-

मिन्द्रियादीनामपायात्। नचान्वयव्यतिरेकसिद्धहेतुभाव-
स्याभावेऽपि हेत्वन्तरात् कार्य्यजन्म निर्हेतुकत्व प्रसङ्गात्। न-
चाहेतुकं कार्य्यं नाम ततःस्वतः सिद्धैवास्य ज्ञान चिकीर्षा-
प्रयत्नशक्तिर्यद्गोचरा तज्जातीयसमस्तगोचरेति सर्वज्ञसिद्धिः।
शरीरापायएव कथमिति चेत् दृश्यस्य प्रत्यक्षबाधितत्वात्
अदृश्यस्यापि सावयवतया मूर्त्ततया च निविड़तरपाषाणम-
ध्यवर्त्तिनि भेकशरीरादौ कार्य्ये कर्त्तव्ये नाभग्नस्य प्रवेशः।
नच परमाणुरूपं तच्छरीरम् अनन्तरालत्वे निर्मनस्क
तयेन्द्रियाश्रयत्वानुपपत्तेः नच बहिर्वृत्तिमनो ज्ञानजननो-
पयोगि शरीरवैयर्थ्य प्रसङ्गात्। नच दविष्ठ एव सूर्य्यादि
स्तत् कुर्य्यादिति साम्प्रतं कारकानधिष्ठानात् शरीरस्य
तदायतनतया प्रयत्नस्याव्यापकत्वात्। तथापि च व्यापकत्वे
असमवायिकारणानुरोधेनाकारणकतया तदैव नित्यत्वम्।
नचादृष्टमात्र सम्बन्धेन क्रियाहेतुत्वम् अस्मदादिप्रयत्नस्यापि
तथाभावप्रसङ्गात्। नच संयुक्तसंयोगादधिष्ठानं साचाद-
धिष्ठानस्य विवक्षितत्वात्। विषापनोदादौ कथमिति चेन्न
तत्रास्मदादेर्ज्ञानमात्रं प्रति यत्नस्या विरोधात् विषापनो-
दादौ तु तत्सहकारिणस्तज्जन्यादृष्टसहकारिणो वाऽन्यस्यैव
तत्रत्यो यत्नः क्रियाहेतुरिति। सर्गादौ तु न शरीरगन्धो-
पीति सर्वथाकलेवरविगमादकारणकतया बुद्धेः सर्वज्ञत्व-
मनिवार्य्यं विशेषात् कर्त्तुरेकस्येति।

अस्तु तावदसौ सर्व्वज्ञः कर्त्ता वक्ता तु कथमिति चेत्

वचनशक्तौ सत्यां परार्थैकतानत्वात् योहि हिताहितविभागं विद्वान् परार्थाभिप्रायः स स्थानकरणपाटवे सत्यविदुषेऽवश्य-मुपदिशेत् यथाम्नाय दक्षिणेन याहि वामेन मागा-इति पृथग्जनोऽपि तथा च भगवानिति स्थानकरणपाट-वमसिद्धं देहाभावात् तेषां ताल्वादिविवृतादिरूपत्वात् । नच तदन्तरेणैव तन्निष्पत्तिः तदुत्पत्तेरवधारणात् । नच तत्कारणमनधितिष्ठत स्तत्कर्तृत्वमीश्वरस्यापीति चेन्न यस्य कार्य्यस्य यत् कारणम् अन्वयव्यतिरेकसिद्धं तत्-कारणाधिष्ठानयोः स्थूलसिद्धार्थं तदवयवपरम्पराकारणाधि ष्ठानवदवश्यम्भावनियमात् । नच सर्व्वत्र कार्य्ये कायः कारणमिति प्रागुपेक्षितः पितृत्वाद्योपदेशानुमानम् । त-थापि कतम आगमस्तेन प्रणीतइति चेत् वेदायुर्वेदादि-रित्यधिकरि कर्णज्वरः सिंहनादः । तथाहि न तावदय-मायुर्वेदोऽप्रमाणं सम्वादस्य प्रायिकत्वात् विसम्वादस्य कालतालीय तथा कर्तृकर्म्मसाधनवैगुण्यहेतुकत्वात् पुन-स्तत्साद्गुण्ये ततएव फलसिद्धेः । नच निर्म्मूलस्तथा भवि-तुमर्हति अतिप्रसङ्गात् । नचान्वय व्यतिरेकावस्य मूलम् आवापोद्वापेन योगानामनन्ततयार्व्वाचीनेनाशक्यत्वात् विषादौ तथाकरणे बहुतरानर्थप्रसङ्गाच्च । कश्चित्प्रेक्षावा-ननाकलितवस्तुतत्त्वः पाठनप्रोषणचारणशिवाच्यधनलङ्घना-दिकं योग्यायै कारयेत् कुर्य्याद्वा । नचोपदेशस्योपदेशपा-रम्पर्य्यमात्रं मूलम् अवश्यमुपदेशस्य क्वचित् प्रमाणे विश्रा

त्वेरिति व्याप्तेः। नच नित्यागमसम्भवः वाक्यत्वात्। तस्मा-
दतीन्द्रियार्थदर्शिपूर्व्वकोऽयमिति विशेषः। तथाप्यनेन
दृष्टान्तेन महाजनपरिगृहीतत्वाद्वेदा अपि सर्व्वज्ञपूर्व्वका-
इत्यनुमीयते।

ननु महच्छब्दो यद्यत्र पूज्यप्रामाणिकवचनस्तदा-
सन्दिग्धासिद्धविशेषणो हेतुः। अथ बह्वर्थः तदा सुगता-
द्यागमैरनैकान्तः तेषामपि वा सर्व्वज्ञपूर्व्वकत्वमिति चेन्न
बहुत्वातिशयस्य विवक्षितत्वात् कोऽतिशयः सर्व्वदर्शनान्तः-
पातित्वं कर्त्तुः परिग्रहः अर्थानुष्ठानं स्वीकृतव्यवहार-
व्याकरणादिपालनीयत्वं स्वीकृतप्रामाण्यायुर्वेदस्वीकृतार्थ-
त्वर्थत्वञ्च। तथाहि नास्त्येव तद्दर्शनं यत्र सांप्रतमेत-
स्मापि गर्भाधानाद्यन्त्येष्टिपर्य्यन्तां वैदिकीं क्रियां
जनो नानुतिष्ठति स्पृश्या स्पृश्यादिविभागं वा जनोनानु-
मनुते व्यतिक्रमे वाचमनस्नानादि प्रायश्चित्तं नानुति-
ष्ठति। न सर्वत्र सर्व्वोजनएवमिति चेत् माभूत् नहि
सर्वत्र सर्वयोगिभिरायुर्वेदार्थो नानुष्ठीयतइति न तस्य
महाजन परिग्रहः अपि तु सर्वदर्शनान्तःपातिभिरित्येव।
तथापि न सर्वो वेदार्थएवमिति चेत् माभूत् नहि सर्वोवै-
द्यकार्थएव मपितु कश्चिदपि केनापि एवन्तर्हि सौगताद्या-
गमार्थोऽपि कश्चिदहिंसादिः सर्वदर्शनान्तःपातिभिरनुष्ठीय-
तएव कैश्चिदिति सोऽपि महाजनपरिगृहीतः स्यात्। न
सन्देहात् किमहिंसादिर्वैदिकएवार्थो विड़ालव्रतन्यायेन स-
द्भापादनाय शौद्धोदनिप्रभृतिभिरुपनिबद्धः आहोस्वित् स्वयं

प्रदृष्ट एवेति । न तावत् स्वयं दृष्ट एवेति अमणकाद्यागम-साधारणत्वात् यच्च साधारणो मण्डलीकरणादिः केशोल्लु-ञ्चनादिर्वा नासौ सर्वैरनुष्ठीयते वैदिकस्त्वसाधारण एव नि-षेकादिस्तथेति । अपि च वाचकापभ्रंशविभागोऽस्ति वस्तु-तोनवा तद्व्यवहारस्तावत् सर्वैरेव तीर्थिकैरापोशानेन स्वी कृतः तथा शिक्षाज्योतिश्छन्दोनिगमनिरुक्ताद्यर्थश्च तेषां वे-दरक्षैव परमं प्रयोजनमिति ।

स्यादेतत् व्याकरणादीनि तावत् सर्वैरेवाभ्युपेतार्थानि वेदा अपि तैः पालनीया भवन्तु तएवेति तु कुतः संसार-मोचकागमोऽपि तत्पालनीयः किन्न स्यादिति चेन्न तत्कर्तृ-भिस्तथानभ्युपगमात् अव्युत्पादनात् असाधारणलिङ्गाभा-वात् विरुद्धलिङ्गसद्भावाच्च । नहि वेद शब्दार्थाविव सुगता-द्यागमासाधारणशब्दार्थावनुरोध्य तेषां प्रवृत्तिः यतएवमु-न्नीयते प्रत्युत विरोधएव तैस्तदप्रामाण्यव्युत्पादनात् तस्मात् सर्वाभ्युपेतव्यवहारव्याकरणादिपालनीयत्वमपि वेदानामेव नान्येषां सर्वाभ्युपेतप्रामाण्यैरायुर्वेदादिभिः स्वीकृतश्चैषा-मर्थः प्रतिपदं तदीय शान्तिकपौष्टिकप्रायश्चित्ततपोजप्यदा-नहोमाभ्युपदेशात् नचैषभागस्तत्राप्रमाणमेव तुल्ययोगक्षेम-त्वात् । एतदेवासिद्धं प्रक्षेपस्यापि सम्भवादिति चेन्न अध्ये-त्रध्यापयितृसम्प्रदायाविच्छेदात् अन्यथाकरणे चास्य बहुभ्यः स्यान्निवारणमिति न्यायात् । तस्मादेवंरूपोऽपि महाजनप-रिग्रहो वेदानामेवेति सोऽयमीदृशो महाजनपरिग्रहो वेद-स्यासर्वज्ञपूर्वकत्वेऽसम्भवन् सर्वज्ञपूर्वकत्वेन व्याप्यते । यथा-

हि पूर्वविरुद्धापूर्वव्याकरणवैद्यकादिषु विगानादपरिग्रह-स्तथा तथाविधे धर्म्मशास्त्रेऽपि व्यामोहाद्भवन्नपि कस्यचिदेव नतु सर्वेषाम्। अथ पूर्वाविरुद्धन्तथापि पूर्वस्य पूर्ववदपरिग्रहे केनचित् परिग्रहे वा कथं तन्मूलस्यान्यस्य सर्वैः परिग्रहः। नच नासीदेव पूर्वं धर्म्मशास्त्रं मानान्तरस्याच वस्तुनि कुण्ठतयानुष्ठानाभावस्य प्रसङ्गात्। तथाच धर्म्माभावे तु तत्कार्य्यस्य सुखस्याप्यभावे रागानुत्पत्तौ लोक समीहोच्छेदे लोकोच्छेदप्रसङ्गः।

तस्मान्महाजनपरिगृहीतपूर्वपूर्वागमपूर्वकत्वाद्वा प्रवाहनित्यत्वाद्वा प्रलयविच्छेदे सर्गादौ सर्वानुविधेयपुरुषधौरेयपूर्वकत्वाद्वा महाजनपरिग्रहः। ननु पूर्वागमानपेक्षावार्वाचीनपुरुषपशुपूर्वकत्वात् पूर्वागमप्रामाण्याप्रामाण्ययोरुभयथापि तस्य विप्रलम्भकत्वात् प्रामाण्ये हि तद्विरुद्धाभिधानं विप्रलम्भएव अप्रामाण्येप्युपायमविदुषोऽनुष्ठाने तदाभासानुष्ठाने वा असर्वज्ञोपदेशाविप्रलम्भएवेति। तत्र न प्रथमो वेदपरम्परानुपलम्भात् अर्वाचीनानां पाठपारतन्त्र्यमात्रेण प्रवाहोपपत्तौ तत्कल्पनायां प्रमाणाभावात्। नापि च द्वितीयः वेदह्रासदर्शनात् यत इदानीमश्रूयमाणस्यापि वेदस्यानुष्ठीयतेऽर्थः निबध्यते च स्मृत्यादिभिः पुरुषाणामपचीयमानशक्तित्वाच्च यथा ह्यश्वमेधराजसूयाद्यनुष्ठानशक्तेरपचयस्तथाध्ययनशक्तेरपि। नच पूर्वमपि नानुष्ठिताएव राजसूयादयः तदर्थस्य वेदवाक्यस्य वैयर्थ्यप्रसङ्गात्। नच नित्यानुमेयवेदसम्भवः वर्णानां नित्यत्वेऽप्यानुपूर्व्याः पाठाधी-

यत्वात् । नचानुपूर्व्वीशून्या वर्णाः पदं नाम नचाकाङ्क्षाद्युपेत पद कदम्बकादन्यद्वाक्यं नामेतिगुरुरपि लघुरेव । तस्मात् पुरुषाणामनुष्ठानशक्तिवद्ध्यंयनशक्तिरपि युगक्रमेणापचीयते ततो वेदानां शाखोच्छेदः तदर्थानामनुष्ठानोच्छेदः वर्णाश्रमाचारव्यवस्थाविप्लवश्चेति ।

अतएव भगवतोव्यासस्य पुरुषशक्त्यपचयमवेक्ष्य वचनानि स्वल्पायुषः स्वल्पसत्वाइत्यादीनि वेदोत्सादमवेक्ष्य प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते इत्यादीनि अनुष्ठानोत्सादमवेक्ष्य दानमेकं कलौ युग इत्यादीनि आचारविप्लवमवेक्ष्य प्रजास्तत्र भविष्यन्ति शिश्नोदरपरायणा इत्यादीनि । तथा च श्रूयमाणा अपि वेदावयवा उत्सादमुपयास्यन्ति वेदत्वात् वाक्यत्वाद्वा उत्सन्नशाखावदिति न्यायः यथाचैतत् तथा पर्वता अपि चूर्णीभविष्यन्ति पार्थिवत्वात् घटवत् समुद्रा अपि शोषमुपयास्यन्ति जलाशयत्वात् स्थलीपल्वलवत् सूर्य्योऽपि निर्वास्यति तेजस्त्वात् दीपकवत् ब्रह्मापि प्रैष्यति शरीरित्वात् अस्मदादिवत् इत्याद्यागमाविरोधेनानुमीयताम् । स्यादेतत् भविष्यदुच्छेदोऽनुमितः सतु भूतोऽपीति कुत इति चेत् अतएव यत उत्सादानन्तरं पुनः सर्गेण भाव्यम् ॥ अन्यथा संसारिणां कृतहानप्रसङ्गः । नहि विश्वनिर्म्माण मन्तरेणभोगस्थानयोः सम्भवः । नच तेन विना कर्म्म प्रवाहसंरोधः । ततोयथा भविष्यन् विश्वसर्गउच्छेदपूर्व्वकस्तथायमपीति । समय नियमस्तु प्राणिनां कर्म्मवैषम्येऽपि वर्षादिनियमवदुदयास्तमयनियम वद्वा दृष्ट-

ल्यः कर्म्मणामेवंस्वभावत्वात्। एतदर्थमेव हि पुराणेषु सृष्टिप्रलययोर्हिवसरात्रिव्यवहारः। तथापि सर्वप्राणिना-मयौगपद्ये किं प्रमाणमिति चेत् द्विःसप्तभौमभुवनप्रासाद-भङ्गेऽपि निर्भया एव ग्रामकुटीहट्टविहारिणः शरीरिण इति महती प्रत्याशा।

तस्मात् सर्गादिमहाजनमन्वादिपरिग्रहपूर्वकोऽयमद्य यावदनुवर्त्तत इति नानवसरदोषावकाशोऽपीति युक्तमुत्प-श्यामः। तदेव कथं मन्वादिभिः परिगृह्यन्तां वेदा इति चेत् आयुर्वेदवदाप्तोक्तत्वनिश्चयात्। सएव कुत इति चेत् अध्यक्षतः तेषामप्यतीन्द्रियार्थदर्शित्वात्। तादृशास्तेषां तत्परिग्रहेण किं प्रयोजनमिति चेत् अस्मद्व्यवहारेणास्मद-पत्यानि व्युत्पद्यन्ताम। तथा च धर्म्मसम्प्रदायः प्रवर्त्तता-मिति भूतदया स्वाधिकारसम्पादनञ्च। अथवा सर्गान्तर-गृहीतव्याप्तिप्रादुर्भावे सुप्तप्रतिबुद्धवत् पितृत्वेनाविप्रलम्भक-त्वमुच्चावचभूतनिर्म्माणदर्शनेन सार्वज्ञमनुमायाप्तत्वनिश्चय-स्तेषाम् तस्य। यद्वा भगवानेव सम्प्रदाय प्रवर्त्तनव्यसन-व्यग्रः कायसहस्राणि व्युत्पाद्यव्युत्पादकभावव्यवस्थितानि निर्म्माय तदातनं महाजनं परिग्राहितवान् नटनोपाध्याय वत् स्वयं नटित्वेति सर्वं सुस्थम्। पक्षत्रयेऽपि चात्र पुरा-णादिसङ्गृह्याप्यस्तीति। स्यादेतत् परमेश्वरप्रवर्त्तितोऽप्यय-मेवं वेदसम्प्रदायः सर्गान्तरवेदापेक्षएवेति सेश्वरमीमां-सापक्षः कपिलपक्षोवा स्यादिति चेत् किमर्थं पुनरियम-पेक्षा पूर्ववेदे जगन्नाथस्य नतावद्वेदार्थोपलम्भाय नित्यसर्व-

ज्ञत्वात्। नापि वचनार्थं स्वभावतः सर्वकर्तृतया आदर्शान पेक्षणात्। नापि विरोधपरिहारार्थं प्रतिपाद्यानां तदनुसन्धान विधुरत्वात् आविधूर्य्ये वा कर्त्तुः सार्वज्ञ्यविज्ञानादेव समस्तविरोधविधूननात्। तथापि पूर्वसर्गान्तरादेव व्यवहारोऽपि परमेश्वरस्य गोचरइति चेत् कः सन्देहः यदि वैतदेव वेदस्य प्रवाहनित्यत्वं न केवलं तस्य किन्तु घटादेरपीति न्यायएव दर्शनमन्यथा मीमांसैवेति क्व सेश्वरमीमांसेति। तस्मादुक्तरूपः परिग्रहो नान्यथा सम्भवतीति प्रतिबन्धसिद्धिः। तथाचाप्तोक्तत्वात् प्रामाण्यमिति। कथं पुनः सुगताद्यागमेषु अनादरश्चान्दसानां वेदविद्वेषिदर्शनात्तः पातिपुरुषप्रणीतत्वादिति माशङ्किष्ठाः जिनेन्द्रजगदिन्द्रप्रभृतिप्रणीतेष्वप्यादरात् तत् कस्य हेतोः महाजनपरिगृहीतपूर्वागमाविरुद्धतया तदनुसारित्वात् कुतस्तर्हि सिद्धप्रामाण्यवेदविरोधात्। कथन्तर्हि कतिपयैरपि तत्परिग्रहः आयासभीरुभिर्दुःखमयजात्यकर्म्मविद्वेषात् उत्तरगर्त्तीयतन्तुवायवत् नत्वेवं वेदे कर्म्मण्येव निर्भरत्वात् त्रैवर्णिकवहिः कृतैरनधिकारिभिरनन्यगतिकत्वात् कीर्त्तिप्रज्ञाकरवत्। नत्वेवं श्रुतौ परैः पूज्यमानानामप्यत्राप्रवेशात् इतः पतितानामपि परैरुपादानात् भक्ष्यपेयाद्वैतरुचिभिश्च रागात् सरभादिवत्। नत्वेव माम्नाये तद्विभागव्यवस्थापकत्वात् कुतर्काभ्यासिभिश्च मोहात् कालाचार्य्यादिवत्। नत्वेवं ब्रह्मणि आबालभावं प्रवृत्तेः अविवेकिभिश्च पाषण्डसंसर्गात् शौण्डिकक्कादिवत्। नत्वेवं प्रकृते पित्रादिक्रमेण

प्रवर्त्तनात् योगाभ्यासाभिमानिभिरव्यग्रताभिसन्धेः सुभूत्यादिवत्। नत्वेवं प्रस्तुते प्रथमतः कर्म्मकाण्ड एव नियोगात् अयोग्यराजीवनात सामान्यश्रमणकवत्। नत्वेवं प्रकृते आगन्तुकानामनधिकारात् कुहकवञ्चितैः समीचीनप्रत्ययात् दीपङ्करदर्शि वालिशवत्। नत्वेवं प्रकृते तदभावात् किन्तु महाजनपरिग्रहाहद्दृप्रामाण्यमनुमाय आयुर्वेदे नैरुज्यकामवदिति।

किं पुनरमीषां मूलं नह्येतावन्तोऽन्यग्रागन्त्रः परविप्रलम्भार्थं प्रणीयन्ते। नच विश्वमेव विप्रलभ्यमिति चेत् भवतु किञ्चिन्मूलं किमनेन चिन्तितेन अतिनिर्बन्धे तु क्षणिकनैरात्म्यादिप्रतिपादकानां तर्काभासः प्रतिपादितश्च तथा शून्यसाकारादिप्रतिपादकानां तु दुरभ्यासः योगशास्त्रेष्वभ्यस्यतः स्वरूपशून्यत्वमेव भाव्यमेवेति प्रतिपादनात्। चैत्यचीवरादिप्रतिपादकानान्तु स्वस्थितिमभिसन्धाय दर्शनान्तरस्थितिद्वेषः स्वस्थितौ प्रमाणमनपेक्ष्य परस्थितौ दिगानात् ब्रह्मचर्य्यादिप्रतिपादकानान्तु वेदाएव न्यायाविरुद्धं परतन्त्रोक्तमप्यनेनाप्यप्रसिद्धेर्गृह्यतइति विमर्शात्। मन्त्रकोषप्रतिपादकानान्तु प्रणववीजजातयः सर्वसाधारण्यः। अद्वैयदेवतानामाङ्गस्त्वधिकः श्रद्धा परिगृहीतसाकारोदेवतेति हस्तसमालोचः सत्यतपःशालिनां वचनं मन्त्रः विषयवत्यां चिन्तायां चित्तस्थैर्य्यं प्रयोजनं कथमन्यथा महर्षीणां शापानुग्रहक्षमता कथं वा चतुर्भुजाष्टभुजादिव्यवस्थितिः दुरूहादिति एकविप्रलम्भार्थं वा केनचित् कियदेव प्रणीतम्।

तेन अनुष्ठितमपरैस्तदनुयायिभिर्गृहीतमनुष्ठितं व्याख्यातं विवर्द्धितञ्चेति किमनुपपन्नम्। तस्माद्विरुद्धागमव्युदासेन वेदाएवार्वाचीनपुरुषपूर्वकत्वशङ्काव्युदासेन परमेश्वरप्रणीतत्वादेव भूतार्थभागस्याप्रामाण्यशङ्काव्युदासेन प्रमाणमेवेति नियमः। कथञ्चरमइति चेत् महाजनपरिग्रहस्य तत्साध्यस्य वा सर्वज्ञपूर्वकत्वस्य पुरुषदोषाभावस्य वा प्रामाण्यहेतोर्भूतभाव्यर्थभागयोः साधारणत्वात्। किं तस्य फलमिति चेत् स्वार्थप्रतिपादनं किं तेन प्रयोजनं यथायथमुपादानं हानं मोचश्च तत्रानर्थकहेतूनां तत्त्वज्ञानाद्धानम् अर्थहेतूनामुपादानम् आत्मानोमोचश्चेति।

कः पुनरयं मोचः आत्यन्तिकी दुःखनिवृत्तिरात्मनः किमात्यन्तिकत्वं तज्जातीयात्यन्ताभावविशिष्टत्वं कथं कारणमात्रोच्छेदात्। अपुरुषार्थोऽयमिति चेत् असत्यस्याकाम्यस्याशक्यस्य दुरन्तस्य च तथाभावात्। नन्वयं तथा सत्योह्ययं प्रमाणसिद्धत्वात् सर्वैरभ्युपगमाच्च काम्यश्च दुःखस्य स्वभावहेयत्वात्। सुखार्थन्तद्धानमिति चेन्न अतद्धेतुत्वात् व्याप्तेरिति चेन्न असिद्धेः। नहि दुःखाभावः सुखेन व्याप्यतइति सुखं तावत्तेन व्याप्यतइति चेत् तर्हि सुखे सत्यवश्यं दुःखा भावोभवेदिति सुखप्रार्थनेऽपि विपरीतापत्तिः नावेद्यत्वादसौ काम्यत इति चेन्न दुःखार्त्तानां तदभाववेदनमभिसन्धायैव तज्जिहासादर्शनात् कथमन्यथा देहमपि जह्युः अविवेकिनस्ते इति चेत् किमत्र विवेकेन दृश्यमाणतामात्रानुबन्धित्वात् पुरुषार्थस्य गम्यागम्ययोः काम्यत्ववत्।

बहुतरानर्थप्रसक्तिशङ्कया तु शास्त्रमनुकूलयन्तस्ते इतरेभ्यो- भिद्यन्ते। अपिचैवं कण्टकादिजन्यदुःखनिवृत्तिरपि पुरु- षार्थो न स्यात् अवेद्यत्वात् प्रथमं विद्यते अभाविति चेत् तुल्य मोक्षेऽपि नाध्यक्षेणेति चेत् तर्हि दुरितक्षयकामस्य कर्मानुष्ठानानर्थक्यप्रसङ्गः तदभावतत्फलाभावयोरनध्य- क्षत्वात्। उपलब्धि योग्यतापन्नानिवृत्तिरूपत्वाद्दयमदोष इति चेत् तुल्यं दुःखवत् सुखस्याप्युच्छेदादकाम्योऽयमिति चेन्न तृष्णया दोषतिरस्कारेण प्रवृत्तिवद्लम्प्रत्ययेन गुण- तिरस्कारान्निवृत्तेरपि दर्शनात् मधुविषसंपृक्त मन्नमत्रो- दाहरणम्। सन्ति केचनालम्प्रत्ययवन्तः नच समर्थं दुःख स्यैव प्राचुर्य्यात् दुःखे सुखहेत्वनुषङ्गेऽपि सुखे दुःखहेत्वनु- षङ्गनियमाच्च। तथाहि न्यायोपार्ज्जितेष्वेव विषयेषु कि- यती सुखखद्योतिका कियन्ति वार्ज्जनरक्षणादिदुःखदु- र्द्दिनानि। अन्यायोपार्ज्जितेषु तु यद्भविष्यति तन्मनसापि चिन्तयितुमशक्यं विदाङ्कुर्वन्तु सन्तो यदि कण्टकादिज- न्येषु दुःखेपि लेशतोऽपि सुखानुसङ्गः। अस्ति तु स्वर्गादि सुखेष्वपि बहुलोदुःखशल्यसम्भेदः अतएव विविच्य भुज्यतां तुषतण्डुलवदित्यशक्यमिति। शक्यश्चायं निवर्त्यत्वात् स्वन्त- स्यापरावृत्तेः अनर्थवासनाननुकूलाभिसन्धित्वाच्चेति। नित्य- न्तु सुखं न सत्यं योग्यानुपलम्भबाधितत्वात्।

श्रुतिस्तत्र प्रमाणमिति चेन्न योग्यानुपलम्भबाधिते तद- नवकाशात् अवकाशे वा ग्रावप्लवनश्रुतेरपि तथाभावप्रस- ङ्गात्। नापि काम्यं तदा सत्त्वात् नहि यद्यस्यास्ति स

तत् कामयते भ्रान्तेरेवं कण्ठचामीकरवदिति चेन्न स्वसम्वेद्ये तदभावात्। नापि शक्यं नहि तन्निर्वर्त्यं नित्यत्वात् नापि विकार्य्यम् अपरिणामित्वात्। न संस्कार्य्यम् अनाधेयातिशयत्वात् न प्राप्यं नित्यसम्बन्धत्वात् न ज्ञेयं ज्ञानस्यापि नित्यत्वात् अनित्यत्वे वा शरीरादिकारणापाये तदनुत्पत्तेः उत्पत्तौ वा तेषामकारणत्वप्रसङ्गात्। तथाच सर्वः सर्वदर्शी स्यात् आत्ममनःसंयोगादेःसर्वत्राविशेषात् ज्ञानज्ञेययोर्नित्यत्वेऽपि तत्सम्बन्धोजन्यते। सच षट्पदार्थव्यतिरेकादुत्पन्नोऽपि निवर्त्तते प्रध्वंसवदिति चेत् भावाभावयोः प्रकारान्तराभावात्। तत्र स नाभावः प्रतियोग्यनुपपत्तेः भावत्वेऽवश्यमुत्पन्नोनिवर्त्तेत उपाध्यन्तराभावात्। अविद्या विध्वंसनमेव तत्प्राप्तिरिति चेत् अत्र न नोविवादः। नह्येकविंशति विधदुःखव्यतिरिक्ता अविद्या नाम तद्विध्वंसनञ्च पुरुषार्थ इति प्रतिपादनादिति दुरन्तञ्च तत् तदभिसन्धेः सुखसंस्कारसहकारितया तदुद्भवे विशिष्टसुखाभिलाषिणोवैषयिकेऽपि प्रवृत्तिसम्भवात्। अलाभेमत्तकाशिन्या दृष्टा तिर्य्यञ्च कामितेत्युदाहरणात्।

स्यादेतत् आत्मा तु किं स्वप्रकाशसुखस्वभावोऽन्यथा वेति पृच्छामः श्राद्धोऽसि चेत् उपनिषदं पृच्छ नैयायिकोऽसि चेत् न नैयायिकसुखज्ञानातिरिक्तस्वभावइति निश्चिनुयाः। तदतिरिक्ते तु सुखज्ञानव्यवहारबीजाभावात् तद्व्यवहाराभावः अनुग्रहाभिष्वङ्गेन्द्रियप्रसादादिलक्षणकार्य्यं हि तद्व्यवहार बीजम्। अ... प्रवणत्वस्मृति-

संस्कारादिकार्य्यञ्च ज्ञानव्यवहारवीजं लोके तयोश्चाभाव आप्नोति। तस्मात्

श्रुतेः श्रुत्वात्मानं तदनु समनुक्रान्तवपुषो
विनिश्चित्य न्यायादथ विहितहेयव्यतिकरम्।
उपासीत श्रुत्वा शमदमविरामैकविभवो
भवोच्छित्त्यै चित्तप्रणिधिविहितैर्योगविधिभिः॥

उपास्यमाने तस्मिन् प्रथमं वहिरर्थएव भासते यमाश्रित्य धर्म्म मीमांसोपसंहारः चार्वाकसमुत्थानञ्च तत्प्रतिपादनार्थं पराञ्चिखानि इत्यादि। तद्धानार्थं परं कर्म्मभ्य-इत्यादि। अथार्थाकारः यमाश्रित्य त्वै दण्डिकमतोपसंहारः योगाचारसमुत्थानञ्च तत्प्रतिपादनार्थमात्मैवेदं सर्वमित्यादि। तद्धानार्थमगन्धमरसमित्यादि। अथार्थाभावः यमाश्रित्य वेदान्तद्वारमात्रोपसंहारः शून्यत्वनैरात्म्यसमुत्थानञ्च तत् प्रतिपादनार्थमसदेवेदमग्रआसीदित्यादि। तद्धानाय अन्धन्तमः प्रविशन्ति ये केचात्महनोजनाइत्यादि। ततोविवेकः यमाश्रित्य सांख्य मतोपसंहारः शक्तिसत्वसमुत्थानञ्च। तत्प्रतिपादनार्थञ्च प्रकृतेः परः स्तादित्यादि तद्धानाय नान्यत् सदित्यादि। ततः केवल आत्मा प्रकाशते यमाश्रित्याद्वैतमतोपसंहारः तत्प्रतिपादनार्थं न पश्यतीत्याहुरेको भवतीत्यादि। तद्धानार्थं नाद्वैतं नापि च द्वैतमित्यादि। ततः समस्त संस्काराभिभवात् केवलोऽपि न विकल्पते यमाश्रित्य चरमवेदान्तोपसंहारः तत्प्रतिपादनार्थं यतोवाचोनिवर्त्तन्ते अप्राप्य मनसा सहेत्यादि। सा

भावस्था न हेया मोक्षनगरगोपुरायमाणत्वात् । निर्वाणन्तु तस्याः स्वयमेव यदाश्रित्य न्यायदर्शनोपसंहारः तत्प्रतिपादनार्थम् अथ यो निष्काम आत्मकाम आप्तकामः स ब्रह्मैव सन् ब्रह्माप्येति न तस्य प्राणा उत्क्रामन्ति तत्रैव समवलीयन्तइत्यादि तस्मादभ्यासकामोऽप्यपद्वाराणि विहाय पुरद्वारं प्रविशेत् यतो मार्गं विमार्गसंसर्गसम्मोहमाशङ्कमानैरुच्यते लक्ष्येण धनुषा योगइति ।

बहुतरपरतन्त्रप्रान्तरध्वान्तभीत
स्तिमितपथिकरक्षासार्थवाहेन यत्नात् ।
इदमुदयकरेण न्यायलोकागमानाम्
व्यतिकरितमवधूय व्यञ्जितं वर्त्म मुक्तेः ॥
नास्य श्लाघामकलितगुणः पोषयन् प्रीतये नः
कोऽन्यै श्चित्रस्तुतिशतविधौ शिल्पिनः स्यात् प्रकर्षः ।
निन्दामेव प्रथयतु जनः किन्तु दोषान्निरूप्य
प्रेक्ष्यांस्तस्य स्खलितवचनं प्रीणयेदेव भूयः ॥
इति श्रीमदुदयनाचार्य्य कृत आत्मतत्त्वविवेकः

समाप्तः ।

---